## §१२ साधनासंकेतः

मणिपद्मसमायोगेऽप्यच्युताद् बोधिचित्ततः।
आलिकालिसमायोगात् प्राणानां च निरोधतः ॥२१॥
अवधूतीपथेनैव जिनक्षेत्रविहारिणः।
शून्ये महासुखे पूर्णे चित्तस्यात्र ध्रुवा स्थितिः ॥२२॥
एष चित्तस्य विश्रामः सिद्धानामर्थदेशना।
अप्राणचित्तसंचारा ऽहिमानलकरा स्थितिः ॥२३॥
सहजस्य स्फुटीकार एष बुद्धेन संगमः।
एहिपश्यकधर्मोऽयं प्रत्यात्मं गोचरः सतां ॥२४॥
हासुखे यन्मनसो ऽचला स्थितिर्
विवृत्य यत्नादवधूतिकापथं।
स्फुटीकृतिः सा सहजस्य, तत्त्वतः
स एव चंडालिकया समागमः ॥२५॥
द्वयंद्वयप्राप्तिमतामविच्युती
सुधाम्बुनः संवृतिबोधिचेतसः।
दत्र मुद्राप्तिरतीव तत्तनौ
रहस्यमेवंप्रतिमे करण्डके ॥२६॥
क्षणं विचित्रं च विपाकवत् क्षणं
क्षणं विमर्दं च ततो विलक्षणं।
इति क्षणानां हि चतुष्टये रता
द्वयंद्वयं प्राप्य भवन्ति साधवः ॥२७॥
क्षणे विचित्रे सुरतं बहिर्बहु
क्षणे विपाके तु सुखस्य वेदना।
क्षणे विमर्दे परिनिष्ठितं सुखे
विलक्षणं तद् यदकल्पितं क्षणं ॥२८॥

२३. तुलनीयं—दोहा १५९

२५. तुलनीयं—दोहा ८५ ; तत्र टीकायां दृश्यते—अवधूतीमार्गमुद्धाट्य..चंडालिज्ञानोल्कया ध्यानेन महासुखस्य स्थितिर्भवति।..चण्डालीयोगभावनया महासुखचक्रे चित्तस्थिरीकरणं हि सहजस्फुटीकरणं कारणं।

इदं हि सर्वं सहजं परात्परं
व्यतीतरूपं यदिदं च रूपवत् ।
तदेव सिद्धैः पथिकाः कथं चन
भ्रमान्ति वै कुंदुरुयोगलक्षणे ॥२९॥
तनोति तृप्तिं सुखसीकरः पृथक्
महासुखादत्र महार्णवोपमात् ।
परंतु तत्त्वं न तदेव विद्यते
तदंशुमात्रं परमार्थमामृति ॥३०॥
महासुखं तन्मनसाविकल्पितं
सदागतिर्गन्तुमलं न वर्तते ।
रवेः प्रवृत्तिर्न च शर्वरीपतेर्
न रागिणां तत्र गतिर्विरागिणां ॥३१॥

२७-३१. द्रष्टव्यात्र वज्रोलिसाधना हठयोगप्रदीपिकायामुक्ता । तथा च तत्र श्लोकाः—

स्वेच्छया वर्तमानोऽपि योगोक्तैर्नियमैर्विना ।
वज्रोलिं यो विजानाति स योगी सिद्धिभाजनं ॥
तत्र वस्तुद्वयं वक्ष्ये दुर्लभं यस्य कस्य चित् ।
क्षीरं चैकं द्वितीयं तु नारी च वशवर्तिनी ॥
मेहनेन शनैः सम्यक् उर्ध्वाकुंचनमभ्यसेत् ।
पुरुषोऽप्यथवा नारी वज्रोलीसिद्धिमाप्नुयात् ॥
यत्नतः शस्तनालेन फूत्कारं वज्रकन्दरे ।
शनैः शनैः प्रकुर्वीत वायुसंचारकारणात् ॥
नारीभगे पतद्बिन्दुमभ्यासेनोर्ध्वमाहरेत् ।
चलितं च निजं बिन्दुमूर्ध्वमाकृष्य रक्षयेत् ॥
एवं संरक्षयेद् बिन्दुं मृत्युं जयति योगवित् ।
अयं शुभकरो योगो भोगयुक्तोऽपि मुक्तिदः ॥

३१. तुलनीयम्—

बुद्धेरगोचरतया न गिरां प्रचारो—
द्वारे गुरुप्रथितवस्तुकथावतारः ।
तत्तु क्रमेण करुणादिगुणावदाते
श्रद्धावतां हृदि पदं स्वयमादधाति ॥

[ दोहा १६४ इत्यत्र टीकायामुद्धृतम् ]

निरंजनं तत् सहजं गतद्वयं
महासुखं तत् खसमं [illegible]।
रसे समं तत्त्वफलामनस्क्रियं
तथागतस्तत् परमार्थनिर्वृतिः ॥३२॥
भवेद् हिरण्यस्य भवेदुतायसः
करोति बन्धं निगडो न मोचनं।
भवेत्सदर्थो ह्यसदर्थ एव वा
न कल्पितार्थः परमार्थ उच्यते ॥३३॥
अकल्पितार्थे न मनः प्रवर्तते
वचो वराकं तु कथं प्रवर्तताम्।
ततो हि मौनाः परमार्थदेशने
तथागता यान्ति मुनित्वभाजनं ॥३४॥
न तत् तत्त्वं शून्यं न च पुनरशून्यं विलसति
प्रवृत्तं भावेन प्रसरति न चाभावमनुगं।
विकल्पानां जालैः सततमवधूतं समरसं
परोक्षे प्रत्यक्षे नयनमनसोर्नापि विषयः ॥३५॥
अनामाख्यं तत्त्वं बहुतरविकल्पैरिह जनाः
सदा नाम्नां जालैर्विविधविधरूपैर्दिविषदां।
पठन्तो ध्यायन्तो वचनबहुलैरागमगणैर्
अजानन्तो ह्येव प्रकटमुपतिष्ठन्ति कुधियः ॥३६॥
स एवैको देवः सकलबहुशास्त्रागमगणैः
सदा संद्रष्टव्यः श्रवणमननध्यानविधिभिः।
तमेवात्मारामाः सुगततनुजाः सिद्धनिवहाः
शरीरे पश्यन्तो जगति विचरंतीह सुकृतः ॥३७॥

३४. तुलनीयम्—

स जयति सुखराज एकः कारणरहितः सदोदितो जगताम्।
यस्य च निगदनसमये वचनदरिद्रो बभूव सर्वज्ञः ॥

[ दोहा १०३ ; इत्थम टीकायां दृश्यते ]

दुरधिगम्यमिदं सहजं पदं
विरल एव जनः श्रृणुते ततः ।
प्रविरलो यतते खलु चर्यया
समधिगच्छति यः स तु दुर्लभः ॥३८॥
रहस्यतोऽप्यत्र रहस्यमुत्तमं
विनिर्विशन्तस्तदिदं स्वचर्यया ।
सुखेन गायन्ति जिनात्मसंभवाः
सुगीतिदोहाभिरनास्रवोन्मदाः ॥३९॥

वचांसि तानीह परां पवित्रतां
भजन्ति मन्त्रप्रतिमाणि गूढतां ।
सदैव गम्यानि रहस्यवेदिभिर्
जनोऽत्र को वेद समग्रभावतः ॥४०॥

## §१३ कल्याणमित्रानुस्मरणं

यथाप्तार्थो वचसां यथा स्फुटो
भवेदभीष्टार्थविगाहने क्षमः ।
तथा प्रयत्ने विहितादरोऽभवं
प्रबोधचन्द्रस्य वचोऽनुपालयन् ॥४१॥
विशोध्यमाने क्रियमाणटिप्पणी
विमुद्र्यमाणे युगपद् यथाक्षणं ।
यदाभवद् ग्रन्थ इहाल्पमुद्रितो
दिवं प्रबोधो ऽत्र गतो विहाय नः ॥४२॥
षष्ठ्यां हि पौषशुक्लस्य बुधवारान्तिमे क्षणे ।
गुरुवारप्रवृत्तेस्तु पूर्वं दिनकरोदयात् ॥४३॥
धंधावारे ( २४९९ ) हि भुवने निर्वृते लोकनायके ।
द्वन्द्वैकव्योमनयने ( २०१२ ) विक्रमार्कस्य वत्सरे ॥४४॥

प्रबोधचन्द्रः श्रीमान् वागच्चीवंशनन्दनः ।
अस्माकं पश्यतामेव स्कन्धशान्तिमवाप्तवान् ॥४५॥
तस्यात्यन्तवियोगेऽस्मिन् मानसं स्तब्धतां गतं ।
संदृष्टाश्च दिशः शून्यास्तमो व्याप्तं हि सर्वतः ॥४६॥
अपि चास्यामवस्थायां तत्पुण्यस्मरणेन च ।
यत्नेन शोधितो ग्रन्थष्टिप्पणीभिर्यथा पुरा ॥४७॥
तस्यैवादिष्टमार्गेण तत्कृतीः प्रविलोक्य च ।
ऊहेन च स्वकेनापि यथाबुद्धिबलं मया ॥४८॥
तदत्र कुकृतं यद्यत् तन्ममैवाल्पमेधसः ।
यद्यद्धि सुकृतं सर्वं तत्तस्यैव महाधियः ॥४९॥
नमामि तं महोदारमानसं पुण्यकीर्तनं ।
अमृतेनात्र वर्णेन यो ह्यनुस्मर्यतेऽनिशं ॥५०॥
चर्चा नृणामिह मुखे मुख एव यस्य
यो विद्ययात्र भवतोह जनोऽर्चनीयः ।
येनात्र शोधनविधेर्ह्रदबीजमुप्तं
तं स्वर्गतं सुहृदमत्र नमामि भक्त्या ॥५१॥
वाचामधीश्वरमुदारविचारवन्तं
विद्याधिमुक्तिमनसं मृदुचित्तवन्तं ।
सच्छात्रवृन्दसहकर्मिगणानवन्तं
क्रीतो गुणैर्हि भवतोऽत्र नतो भवन्तं ॥५२॥
चन्द्रं विलोक्य जनतास्तमुपेतवन्तं
धीराङ्गभवत्युदयकालमपेक्षमाणा ।
अत्यन्तमेव सुहृदीह गतेऽत्र चन्द्रे
धैर्यं भवेन्मम कथं नु महान्धकारे ॥५३॥
नाम त्वदीयममृतं रसनावलेह्यं
स्मर्तुं निधिर्नु भवतोऽत्र वचोविलासः ।
लेखस्तवास्ति सकलो ऽध्ययनस्य पात्रं
त्वं नासि किन्तु वपुषात्र सदानमस्यः ॥५४॥

शून्यं जगत् सकलमेव जिनोऽनुशास्ति
प्राप्नोति कालवशतः सकलोऽत्र शून्यं ।
निर्मान्ति कायमिह लोकहिताय बुद्धाः
तं किन्तु कालमतिगम्य न धर्तुमीशाः ॥५५॥
या शून्यता हरति पांडुदलान्यरण्ये
या नूतानि कुरुते मृदुपत्रकाणि ।
यामन्तरेण गतिरस्ति न हि प्रपंचे
सर्वेश्वरी जयति सा विगतप्रपंचा ॥५६॥
करुणाशून्यते यस्य महत्यौ देशने शुभे ।
तं नतः शून्यराजानं* शान्तिभिक्षुस्तथागतं ॥५७॥

* ननु 'नमामि शून्यराजं तम्' इति संस्कृतं नोक्त्वा किमर्थं 'तं नतः शून्यराजनम्' इति संस्कारहीनमुच्यते। अत्र सिद्धाचारपरंपरापालनातिरिक्तं नान्योऽस्ति कश्चिद् हेतुरशक्तिः प्रमादो वा तथा चोक्तम्—

तेषां च सुशब्दवादिनां सुशब्दग्रहविनाशाय अर्थशरणतामाश्रित्य क्वचित् वृत्ते अपशब्दः। क्वचित् वृत्ते यतिभंगः। क्वचित् अविभक्तिकं पदं। क्वचित् वर्णस्वरलोपः। क्वचित् वृत्ते दीर्घो ह्रस्वः; ह्रस्वो ऽपि दीर्घः। क्वचित् पंचम्यर्थे सप्तमी। चतुर्थ्यर्थे षष्ठी। कुत्रचित् परस्मैपदिनि धातौ आत्मनेपदं; आत्मनेपदिनि परस्मैपदं। क्वचित् एकवचने बहुवचनं; बहुवचने एक वचनं; पुंलिंगे नपुंसकलिंगं; नपुंसके पुंलिंगं। क्वचित् तालव्यशकारे दन्त्यमूर्धन्यौ; क्वचित् मूर्धन्ये दन्त्यतालव्यौ; क्वचित् दन्त्ये तालव्यमूर्धन्यौ॥ एवमन्येऽपि अनुसर्तव्याः तन्त्रदेशकोपदेशेनेति। इत्येवमादयोऽप्यपशब्दास् तदन्येऽपि योगिनावगन्तव्या आगमपाठात् इति। एवं टीकायामपि सुशब्दाभिमाननाशाय लिखितव्यं मया अर्थशरणतामाश्रित्य इति॥ [ इति विमलप्रभायां कालचक्रतंत्रटीकायाम् कौलज्ञाननिर्णयस्यामुखे श्रीप्रबोधचन्द्र-बागचीसमुद्धृतायाम् ] ॥

# चर्यागीतिकोषः

नमः श्रीवज्रयोगिन्यै ॥

॥१॥

[ राग पटमञ्जरी लुइपादानाम् । ]

काआ तरुवर पञ्च वि डाल[1] ।
चञ्चल चीए पइठा[2] काल[3] ॥ [१]

दिढ़[4] करिअ महासुह परिमाण ।
लुइ भणइ गुरु पुच्छिअ जाण ॥ ध्रुवपद ॥

सअल समाहिअ काहि करिअइ ।
सुख दुखे[5] ते निचित मरिअइ[6] ॥ [२] ध्रु ॥

एडिअउ छान्दक [7]बान्ध[8] करण[9] कपटेर[10] आस[11] । [12]
सुनुपाख[13] भिड़ि[14] लेहु रे पास ॥ [३] ध्रु ॥

भणइ लुइ आम्हे झाणे[15] दिठा ।
धमण[16] चमण[17] बेणि पाण्डि बइठा[18] ॥ [४] ध्रु ॥[19]

1. Yan lag 'limb'. 2. H. पइठो । 3. Sgra gcan=राहु ; तमस् 'dark' ; the latter word is an equivalent of काल 'black'. 4. H. दिट ; brtan par 'firmly'. 5. rtsa 'root(?)'. 6. H. मरिआइ । 7. Sdeb 'to fasten together' ; CF. Bengali छान्द ( mod. छाँदा ) 'to fasten together'. 8. Sbyor 'to attach'. 9. byed cig 'doing'. 10. gyo sgyu'i 'of deceit'. 11. bla 'blessing'=आशस्, आशा, आशिस् 'wish or blessing'. 12. H. एडिएड छान्दक बान्ध करणक पाटेर आस । 13. phyogs =पक्ष 'side'. 14. H. भिति ; bciṅs gis बधान, संसज । 15 H. साणे ; bsam gtan =ध्यान । 16. zla ba=चन्द्र । 17. ñi ma=सूर्य । 18. H. बइण । 19. The *gīti* 'song' is in the *rāga* 'musical mode' called पटमञ्जरी but Tibetan Translator renders it as paṭaha'i sñe ma=पटहमंजरी ।

कायः तरुवरः पञ्चापि शाखाः ।
चञ्चलचित्ते प्रविष्टः कालः ॥१॥

दृढं कृत्वा महासुखं परिमाहि ।
लूयी भणति गुरुं पृष्ट्वा जानीहि ॥

सकलसमाधितः किं क्रियते ।
सुखदुःखतः निश्चितं म्रियते ॥२॥

परित्यज्य छन्दबन्धकरणं कपटस्य आशाम् ।
शून्यपक्षं संसज्य लभस्व भोः पार्श्वम् [ पाशं वा ] ॥३॥

वदति लूयी मया ध्याने दृष्टम् ।
धवन-चवनद्वयोपरि उपविष्टेन ॥४॥

श्रीमत्सद्गुरुवक्त्रपङ्कजरसास्वादस्फुरद्धीदयो
नत्वा श्रीकुलिशेशमद्वयधियं श्रद्धाप्रसन्नाननः ।
श्रीलूयीचरणादिसिद्धरचिते ऽप्याश्चर्यचर्याचयं
सद्वर्त्मावगमाय निर्मलगिरां टीकां विधास्ये स्फुटम् ॥

[१] रागपटमञ्जरी-काआतरुवरेत्यादि । श्रीमद्गुरुचरणारविन्दमकरन्दबिन्दुसन्दोह[20]संतर्पितानन्दस्तिमितहृदयः सत्यद्वयमहामोहभ्रमजलधिमध्यनिमग्नाशरणदीनजनसमुद्धरणकामो हि सिद्धाचार्यश्रीलूयी[21]पादः प्रणिधिप्रेरितावतारणार्थं काअतरुव्याजेन शुद्धधर्मतापीठिकां प्राकृतभाषया रचयितु माह कायेत्यादि । रूपादयः पञ्च स्कन्धाः । षड् इन्द्रियाणि धातवो विषयाश्च ग्राह्यग्राहकग्रहणोपलक्षितपल्लवत्वात् काय[स्] तरुवरत्वेन गृहीतः । नन्वचेतनत्वात् कथं कायस्तरुवरः । नैष दोषः । तथैव बहि[ः]शास्त्रकारैर् अप्युत्प्रेक्षालङ्कारपरैः किञ्चिद् भेदाधिष्ठानं हि सादृश्यमुदीरितं । किमुतास्य प्रकृत्याभास[22]दोषवशात् चाञ्चल्यतया प्राकृतसत्त्वेनाच्युतिरूपो हि राहुः । स एव कालः । कृष्णप्रतिपद्दशायां प्रविष्टः । यस्माद् नन्दा-भद्रा-जया-रिक्ता-पूर्णातिथिक्रमेण संवृतिबोधिचित्तमृगाङ्कं शोषं नयतीति । अयमप्यर्थं कृष्णाचार्यपादैर् अभिहितः—

20. H. adds शान्त after संदोह, Tib. omits it. 21. H. लूइ
22. H. ०भाष ।

वरगिरि कन्दरगुहिर जगु तहि सअल वि तुट्टइ ।
विमल सलिल सोस जाइ जइ कालग्गि पइट्टइ ॥[23]

तथा च **रतिवज्र** —

पतिते बोधिचित्ते तु सर्वसिद्धिनिधानके ।
मूर्च्छिते स्कन्धविज्ञाने कुतः सिद्धिरनिन्दिता ॥

तथा च **संपुटोद्भवतन्त्रराजे**—

अनल्पसंकल्पतमोऽभिभूतं
प्रभञ्जनोन्मत्ततडिच्चलं च ।
रागादिदुर्वारमलावलिप्तं
चित्तं हि संसारमुवाच वज्री ॥

तस्माद् ये केचित् प्रादेशिकाः परिपक्वकुशलाः भगवतः पञ्चक्रमप्रवेशोपायधारणपूर्वेण युगनद्धरूपं सहजानन्दफलं सततमन्वेषयन्ति तेऽपि वज्रोपमसमाधिं साक्षात्कुर्वन्ति । **आर्यदेवपादैर्** अप्युक्तं पञ्चक्रमानुपूर्वेण विना निष्पन्नक्रमसम्बोधि[:] साक्षात्कर्तुं न प्राप्यते ॥

[ध्रु_] दिढ[24]करीत्यादि । अनेनोपासक[25]संवराद्यनुपूर्व्या[26] यथापरिपाट्याभिषिक्तो योगिवरः समयसंकेतद्रव्योपहारेण सद्गुरुमाराध्यार्धरात्रौ प्रज्ञाज्ञानाभिषेकं लब्ध्वा दृढं यथा भवति तथा महासुखं चतुर्थानन्दं त्वं परिमाणय । भणइ लुइ इत्यादि । तस्मिन् कुलिशारविन्दसंयोगाक्षरसुखोपायं श्रीगुरून् पृष्ट्वा विरमानन्दे व्याप्यव्यापकतया सर्वधर्मानुपलम्भरूपं सहजानन्दमहासुखम् अहर्निशं जानीहि । तथा च **श्रीसमाजे**—

न विना वज्रगुरुणा सर्वक्लेशप्रहाणकं ।
निर्वाणं च पदं शान्तमवैवर्तिकमाप्नुयात् ॥

तथा च **नागार्जुनपादैर् वज्रजापे** चोक्तं—

गिरीन्द्रमूर्ध्नः प्रपतेत् तु कश्चि-
न्नेच्छेच्च्युतिं हि च्यवते तथापि ।
गुरुप्रसादात्तहितोपदेश
इच्छेन्न मोक्षं च तथापि मुक्तः ॥

23. *Kāṇhapāda : Dohākoṣa* verse 14. 24. H. दिढ । 25. H. ०शक । 26. H. ०अनुपूर्व्वा ; rim pas 'by succession'.

**सरहपादैर्** अप्युक्तं **प्रबन्धे**—

या सा संसारचक्रं विरचयति मनःसंनियोगात्महेतोः
सा धीर्यस्य प्रसादाद् दिशति निजभुवं स्वामिनो निष्प्रपञ्चं ।
तच्च प्रत्यात्मवेद्यं समुदयति सुखं कल्पनाजाल[27]मुक्तं
कुर्यात् तस्याङ्घ्रि[28]युग्मं शिरसि सविनयं सद्गुरोः सर्वकालं ॥

**श्रीहेवज्रे**ऽपि—

आत्मना ज्ञायते पुण्याद् गुरुपर्वोपसेवया ॥०॥

[२] पदान्तरेण महारागनयसमाध्यु[?धिमु]द्दीपयन्नुद्दशंसामाह सअलसमाहीत्यादि । **भगवतैव** नयभेदेनानन्तापर्यन्ताः समाधयो दशाकुशलपरिहाराय इन्द्रियनिरोधाय निर्दिष्टाः । तैरत्र समाधिभिर्महारागनये सुखरहितत्वाद् दुष्करपोषधादिनियमैश्च किं चिन्न क्रियते । अतः **श्रीसमाजे**—

दुष्करनियमैस्तीव्रैर्मूर्तिः शुष्यति दुःखिता ।
दुःखाद्धि क्षिप्यते चित्तं विक्षेपात् सिद्धिरन्यथा ॥ इति ।

तथा च **श्रीहेवज्रे**—

रागेण बध्यते लोको रागेणैव विमुच्यते ।
विपरीतभावना ह्येषा न ज्ञाता बुद्धतीर्थिकैः ॥ इति ।

एवं महासुखावघातेन महासुखरहितत्वेन बुद्धतीर्थिका बहूनि दुःखान्यनुभूय उत्पद्यन्ते म्रियन्ते च । न ते तस्य भागिनः ।

तथा च **आगमः**—

तत्त्वहीना न सिद्ध्यन्ति कल्पकोटिशतैरपि ॥

इति वचनाद् महारागनयचर्यामप्याह । [ यथा ] **श्रीसमाजे**—

पंच कामान् परित्यज्य तपोभिर्न च पीडयेत् ।
सुखेन साधयेद् बोधिं योगतन्त्रानुसारतः ॥

तथा च **सरहपादैः**—

तनुतरचित्ताङ्कुरका विषयरसैर्यदि न सिच्यते शुद्धैः ।
गगनव्यापी फलदः कल्पतरुत्वं कथं लभते ॥

---

27. H. ०जा(म)ल ; dra ba 'web'. 28. H. तस्यांह्रि० ; Shabs 'an honorific term for feet'.

[३] महारागनयचर्यार्थनिष्यन्दसाक्षात्प्रमाणं अन्येषां वितथज्ञानाभिनिविष्टानां आग्रह-खण्डनार्थं तृतीयपदमाह—एड़िअउ इत्यादि। पश्चाच्छन्दं ओड्डियानकरणादि बन्धं विहाय शून्यता-पक्षकेति नैरात्म्यधर्म [ ] पाशमिति समीपं तदीयालिङ्गनं कुरु। रे संबोधनं। भो मोक्षशीलाः।

तथा च आगमः—

एतानि तानि शिखराणि समुन्नतानि
सत्कायदृष्टिविपुलाचलसंस्थितानि।
नैरात्म्यबोधकुलिशेन विदारितात्मा
भेदं प्रयाति सहजैरपि दुःखशैलैः॥

[४] चतुर्थपदेन यथाभूतधर्म[29] माहात्म्यदृष्टप्रत्ययतामाह भणइ इत्यादि। आदि सिद्धाचार्यलूयीपादः एवं वदति मया लूयीपादेन सिद्धाचार्येण ध्यानवशेनेति मनोविज्ञाने विषयेन्द्रिय-वलयत्वात् श्रीगुरौ चतुर्थोपदेशलब्धाभ्यासेन युगनद्धरूपं दृष्टं। तथा चागमः—

इन्द्रियाणि स्वपन्तीव मनोऽन्तर्विशतीव च।
नष्टचेष्ट इवाभाति कायः सत्सुखमूर्च्छितः॥

धवनं शशिशुध्या ऽऽलिना, चवनं रविशुध्या कालिना, तदुभाभ्यामासनं कृत्वा स्वदेवताहङ्कारोपविष्टः सन् साक्षात्कृतं[30]। तथा च द्विकल्पे—

आलिकालिसमायोगो वज्रसत्त्वस्य विष्टरम्॥इति॥० ॥१॥

[ प्रथमायां चर्यागीत्यां टीका ॥ ]

29. धर्म्य० ; chos kyi=धर्म—०। 30. The construction requires साक्षात्कृतवान् for साक्षात्कृतं।

॥२॥

[ राग गवड़ा कुक्कुरीपादानाम् । ]

दुलि[1] दुहि पिटा धरण न जाअ[2] ।
रुखेर तेन्तलि[3] कुम्भीरे खाअ ॥ [१] ॥

आङ्गण[4] घरपण सुन भो विआती[5] ।
कानेट[6] चौरो[7] निल अधराती ॥ ध्रुवपद ॥

सुसुरा निद गेल बहुड़ी जागअ ।
कानेट चोरे निल का गइ मागअ ॥ [२] ध्रु ॥

दिवसइ बहुड़ी [8]काउइ डरे भाअ[8] ।
राति भइले कामरू जाअ ॥ [३] ध्रु ॥

अइसन चर्या कुक्कुरी पाएँ गाइड़ ।
कोड़ि [9]माझें एकु हिअहिँ समाइड़[9] ॥[10] [४] ध्रु ॥

1. rus sbal 'tortoise' ; Cf. दुरा, दुडा 'a kind of small tortoise' in some of Bengali dialects ; दडी दुडि in the *pillar Inscriptions of Aśoka*, No. 5. ; कमडी डुलिः *Amarakośa* 10. 24. 2. H. जाइ । 3. तेन्तलि∠ तिन्तडी 'tamarind' has been rendered in Tib. bse yab 'a kind of sweet and acidulous fruit' [ S. C. Das ; A Tibetan English Dictionary, p. 1320 Col. 1 ]. 4. Sgo mdum 'door-front'. 5. rig ṅan Lit. कु- ज्ञप्ति । 6. It is probably to be derived from Prākṛta कण्णपीढ an ear-ornament' ; Tib. rendering 'mdo phugs khaṅ logs' is not clear. 7 H. चौरि । 8...8. H. काइइ डरे भाअ ; bya rog mthoṅ bas 'jigs 'is afraid to see the crow'. 9...9. H. मभें एकुहि अहिँ सनाइइ ; gcig sñiṅ 'jug srid dam 'एकस्य हृदयं विशति' । 10. गवड़ा is rendered in Tib. Chen Pa 'great' and probably to be derived from गौरव through वर्णविपर्यास ; Cf. musical airs गड़ा and गारा ।

दुलि(=कच्छपी) दोहपिठरं [ पीठकं वा ] धरणं न याति ।
वृक्षस्य तिन्तिडीं कुम्भीरः खादति ॥१॥

अङ्गणं गृह[ा]पन्नं श्रृणु भोः विज्ञप्तिम् ।
कर्णपीठं चौर्यं नीतं अर्धरात्र्याम् ॥

श्वश्रूः निद्रां गता वधूटी जागर्ति ।
कर्णपीठं चोरेण नीतं कां गतिं प्रार्थयति ॥२॥

दिवसे वधूटी काकभये बिभेति ।
रात्रौ भूतायां कामरूपं याति ॥३॥

ईदृशी चर्या कुक्कुरीपादेन गीता ।
कोटिमध्ये एकस्य हृदयं प्रविष्टा ॥४॥

[१] तमेव महासुखराजानं स्वानन्दासवपानप्रमोदमनसा कुक्कुरीपादाः सन्ध्याभाषया प्रकटयितुमाहुः दुलीत्यादि । द्वयाकारं यस्मिन् लीनं गतं महासुखकमलं दुलि[इति] संध्यासङ्केते बोद्धव्यं । कर्ममुद्राप्रसंगाद् आनन्दादिक्रमद्वारेण तस्य दोहनं संवृतिबोधिचित्तं तद् अवधूतीमार्गेण गत्वा पीठके वज्रमणौ पतद् धरणं न याति । बाल्योगिनस्तस्य धरणे न समर्थाः । तथा च **कृष्णाचार्यपादाः**—

एहु सो उद्धमेरु धरणिधर समविसम उत्तार ण पावइ ।
भणइ काण्ह दुलक्ख दुरवगाह को मणे परिभावइ ॥[11]

तस्माद् गुरुपारम्पर्यक्रमजनितयोगीन्द्राः कायवृक्षस्य फलं तदेव बोधिचित्तं चिञ्चाफलवद् वक्रं । कुम्भीरमिति । विलक्षणपरिशोधितकुम्भकसमाधिना स्वानुभवक्रमेण च तस्य भक्षणं निःस्वभावीकरणं [ साधकाः ] कुर्वन्ति ॥

[ध्रु] ध्रुवपदेन दृढीकुर्वन्नाह—अङ्गनमिति । व्युत्थानवातमुत्प्रेक्षागृहप्रवेशं च बोद्धव्यं । विभातीति । आत्मनि परिशुद्धावधूतीरूपमधिमुच्य योगीन्द्रो वदति भोः परिशुद्धावधूतीके श्रृणु प्रथमं वज्रजापोपदेशेन विरमानन्दावधूतीगृहमुभयं नय । तस्मिन् गृहे पुनरर्धरात्रौ चतुर्थीसन्ध्यायां कानेट इत्यादि । तदेव प्रवेशादिवातदोषविभवं सहजानन्दचौरेण हृतं ॥

11. *Kāṇhapāda* : *Dohākoṣa*, verse 15.

[२] द्वितीयपदेन तमेवार्थं प्रतिनिर्देशयति...स[?सु]सुरेत्यादि । त्वरितादिश्वासं चतुर्थानन्दं योगनिद्रां नीत्वा ऽवधूतीशब्दसंख्यया अनादिभवविकल्पं च धूत्वा प्रकृतिपरिशुद्धावधूतीरूपेण योगिन्यो ऽप्यहर्निशं जागरणं कुर्वन्ति । कानेटप्रभास्वरचोरेण प्रवेशादिवातदोषो यदा नीतस्तदा प्राद्यायभावे योगीन्द्रा दशदिशि क्वापि किंचिन्न प्रार्थय[न्]ति ॥

[३] तृतीयपदेन[12] परिशुद्धावधूतीभेदेन सत्यद्वयस्यानुशंसामाह—दिवसइ इत्यादि । मृद्वाद्यध्याशयभेदेन सा अवधूती[?ति]का संवृत्या शुक्ररूपेण त्रैलोक्यं निर्माय पुनः स्वयमेव दिवादिविज्ञान-मुत्पाद्य काउइ[13] इति कायकालपुरुषाय [ ? ०पुरुषाद् ] विभेति संत्रस्ता भवति । तथा च **आगमः**—

यथा चित्रकरो रूपं यक्षस्याति भयङ्करं ।
समालिख्य स्वयं भीतः संसारे ह्यबुधस्तथा ॥[14]

रातीति । प्रज्ञाज्ञानेन प्रकृतिपरिशुद्धावधूतिका पञ्चस्कन्धादीन् अभिषिच्य । कामरूरिति । स्वयमेव महासुखचक्रस्वस्थाने निर्विकल्पं गच्छति । तथा च **आगम**ः—

स्वस्थानन्दः सहजपवनः कल्पनाजालमुक्तः
शान्तस्तोषं किमपि जनयत्येष शून्यस्वभावः ।
तस्माद् गुर्वाहितबहुकृपोपायहेतोरबाध्य-
संसारे ऽस्मिन् प्रभवति सदानन्दसत्त्वार्थकृत्यः ॥

[४] अतिदौर्लभ्यप्रतिपादनाय चतुर्थपदमाह—अइसनीति । ईदृशी अतीवनिष्प्रपंचचर्या योगीन्द्रस्य स्थितिर् विहरणादिकं कुक्कुरीपादेनैवाभिहितं । अस्यार्थो योगिकोटीनां मध्ये यद्येक-योगिहृदये ऽन्तर्भवतीति । तथा च **कृष्णाचार्यपादाः**—

लोअ[इ] गव्व समुव्वहइ हउँ परमथे पवीन ।
कोडिअ मझेँ एकु जइ होइ निरञ्जन लीन॥[15] ०॥२॥

[ द्वितीयायां चर्यागीत्यां टीका ॥ ]

12. H. द्वितीय० । 13. H. काइइ । 14. महायानविंशक श्लोक 10.
15. *Kāṇhapāda : Dohākoṣa*, verse 1.

॥३॥

[ राग गवडा विरुवापादानाम् । ]

एक से शुण्डिनि[1] दुइ घरे सान्धअ[2] ।
[3]चीअण वाकलअ[3] वारुणी बान्धअ ॥ [ १ ] ॥

सहजे थिर करि वारुणी सान्धे[4] ।
जेँ अजरामर होइ[5] दिढ कान्धे[6] ॥ ध्रुवपद ॥

दशमि दुआरत चिह्न देखइआ ।
आइल गराहक[7] अपणे वहिआ ॥ [२] ॥ ध्रु ॥

चउशटी [8]घड़िये देल पसारा[8] ।
पइठेल गराहक नाहि निसारा ॥ [३] ॥ ध्रु ॥

एक घड़ुली[9] सरुइ नाल ।
भणन्ति विरुआ थिर करि चाल ॥ [४] ॥ ध्रु ॥

1. Chań ma 'a woman wine-dealer' ; शुण्डिनि ∠ शौण्डिनी a feminine of शौण्डिन् 'vintner' [ शुण्डा सुरा पण्यमस्य इति ]. 2. Sbyor byed 'bind together' ; सान्ध =सन्धय् a Denominative root from सन्धि ∠ Hindi सेँध ; Old Bengali सान्धि, Modern Bengali सींधि 'union ; a hole to enter ( as made by thieves in a wall or some where else' ). 3...3. Phabs dań rtses med (?) ; चीअण ( Hindi चिकना, Avadhi dialect चीकन ; Bengali चिकन ) < चिक्कण 'fine' ; वाकल < वल्कल 'bark' has been rendered in Tib. phabs 'chań rtsi' =सुरामंड 'yeast'. 4. सांधे ∠ संदधाति ; bzuń 'catch'. 5. 'gyur med =होइ न is just contrary to the original. 6. H. दिट कान्धः ; phuń po brtan. 7. Chań ño 'a winepurchaser' ; गराहक 'purchaser', compare Hindi गाहक ; Bengali Western dialect गराक । 8..8. H. देट० ; stegs bu ḥsams. 9. bum pa =घट, घटी ; H. स ढुली to be corrected as घड़ली ।

एक सा शुण्डिनी द्वे गृहे संधयति ।
चिक्कणवल्कलेन वारुणीं बन्धयति ॥१॥

सहजेन स्थिरीकृत्य वारुणीं संधय ।
येन अजरामरो भवति दृढस्कंधः ॥

दशमतः द्वारतः चिह्नं दृष्ट्वा ।
आगतो ग्राहकः आत्मना वाहयित्वा ॥२॥

चतुःषष्टिघाटिकासु दत्तः प्रसारः ।
प्रविष्टः ग्राहकः न हि निःसारः ॥३॥

एका घटिका सूक्ष्मः नालः ।
वदन्ति विरुआ स्थिरीकृत्य चालय ॥४॥

[१] परिशुद्धभेदेन तामवधूतिकां विरुआपादाः परमकरुणाम्रेडितमनसा निःसंशयं प्रकटयितुमाहुः । एकसे शुण्डिनीत्यादि । एकका षट्पथयोगात् सा अवधूतिका शुण्डिनी ऊर्ध्वनासा घण्टिकारन्ध्रे चन्द्रसूर्यौ वामदक्षिणौ प्रौढयोगी बलवन्तौ द्वौ संधयति मध्यमायां प्रवेशयति । एतेन स्वाधिष्ठानं द्रढयति । पुनः स्वयमेव आगत्याधोनासायां वज्रमणिशिखरसुषिरे[10] बोधिचित्तं बिन्दुमविद्याबीजद्वेषकलङ्करहितेन प्रभास्वरेण गुरूपदेशादभिसंध्य वारुणीति सुखप्रमोदत्वाद् बोधिचित्तं बन्धयति ॥

[ध्रु] ध्रुवपदेन परमार्थबोधिचित्तं दृढीकुर्वन्नाह । सहजेति । वज्रगुरुप्रसादात् विरमानंदेन सहजानन्दं स्थिरीकृत्य भो बालयोगिन् वारुणीति संध्यावचनेन तदेव संवृतिबोधिचित्तं बोद्धव्यं । तस्य बोधिचित्तस्य स्वाधिष्ठानगतस्याक्षरतासुखपाशेन बन्धनं कृत्वा येनाभ्यासविशेषेण अजरामरत्वं दृढस्कंधं लभसे तत्कुरु । तथा च **योगरत्नमालायां**—

दृढं सारमसौशीर्य[11]मच्छेद्याभेद्यलक्षणं ।
अदाही अविनाशी[12] च शून्यता वज्र उच्यते ॥

[२] पदान्तरेणास्य प्रतिनिर्देशमाहुः । दशमीत्यादि । वैरोचनद्वारे ऽपि महाराग-

10. H. शुसिर । 11. H. शौषीर्य० । 12. H. अविनाणी ; chud mi za 'inexhaustible' =अवनाशा ।

सुखप्रमोदचिह्नं दृष्ट्वा गन्धर्वसत्त्वो हि स्वयमेवागत्य तेन द्वारेण प्रविश्य महासुखकमलरसपानेन स्वचित्त[13] प्रीणनं करोति। तथा च कृष्णाचार्यपादाः—

एवंकार वीअ लइ कुसुमिअ अरविन्द।
हो महुअररूएँ सुरअवीर जिंघइ मअरन्द॥[14]
भणइ काण्ह मण कहवि न फिट्टइ [?फुट्टइ]।
णिच्चल पवण घरणि घरे वट्टइ॥[15]

[ यथात्मनान्तर्ग्रहणं भवति तथा सुखवज्रादपि। आत्मभेदको भवत्यात्मग्राहक आत्मविजेता भवत्यात्मनाथ इति वचनात्॥

[३] तृतीयपदेन गन्धर्वसत्त्वस्य गतिनिरोधमाह। चौउशटी घड़िए इत्यादि। चतुःषष्ठ्या शोधने घट [ी ] इति संध्याभाषया संयोगचक्रे। घड़ि इति संध्याभाषया तदेवासनं। तत्र महारागप्रज्वलिताग्नौ गन्धर्वसत्त्वः प्रविशति। तस्य शुद्धिः पवनेन न भवति। तथा च कृष्णाचार्यपादाः—

अइ ण गमइ ऊइ ण जाइ।
वेणि रहिअ तसु णिच्चल ठाइ॥
भणइ काण्ह मण कहवि ण फुट्टइ।
णिच्चल पवण घरिणि घरे वट्टइ॥[16]][17]

[४] चतुर्थपदेन [ तमेवार्थम् ] आह[18]। एक घडुलीत्यादि। सैव पूर्वोक्तावधूतिका संवृतिपरमार्थसत्यद्वयं घटतीति कृत्वा घटी आभासद्वयनिरोधात् सूक्ष्मरूपा। विरूआपादा एवं वदन्ति। तया शुक्रनाडिकया गुरोरुपदेशात् तमपतितं बोधिचित्तं स्थैर्यं कृत्वा निस्तरंगरूपेण चालय। तथा सेकोद्देशे—

यावन्नो पतति प्रभास्वरमयः शीतांशुधाराद्रवो
देवी पद्मदलोदरे समरसीभूतो जिनानां गणैः।
स्फूर्जद्वज्रशिखाग्रतः करुणया भिन्नं जगत्काननं
गर्जद्वीकरुणाचलस्य सहजं जानीहि रूपं विभोः॥०॥३॥

[ तृतीयायां चर्यागीत्यां टीका ]

13. H. सुचित॰ ; raṅ gi sems =स्वचित्त। 14. *Kāṇhapāda* : *Dohākoṣa* verse 6. H. reads रूपं for रूएँ। 15. ib. verse 13. H. reads काहु for काण्ह। 16. *Kaṇhapāda* : *Dohākoṣa* verse 13. 17. The lacuna in the text has been restored from Tib. 18. H. चतुर्थोपदेशमाह। Tib. rkaṅ pa bshi...pa ni.

॥४॥

[ राग अरु । गुण्डरीपादानाम् । ]

तिअड्डा[1] चापी जोइणि दे अंकवाली[2] ।
कमल कुलिश घाण्ट करहुँ विआली[3] ॥ [१]

जोइनि तँइ बिनु खणहिँ[4] न जीवमि ।
तो मुह चुम्बी[5] कमलरस पीवमि ॥ ध्रुवपद ॥

खेपहुँ[6] जोइनि [7]लेप न जाअ[7] ।
मणिकुले[8] बहिआ[9] ओड्डिआणे[10] समाअ[11] ॥ [२] ॥ध्रु ॥

सासु घरे घालि[12] कोञ्चा[13] ताल[14] ।
चान्दसुज बेणि पखा फाल[15] ॥ [३] ॥ ध्रु ॥

भणइ गुण्डरी अम्हे[16] कुन्दुरे वीरा ।
नरअ नारी माझें[17] उभिल चीरा[18] ॥[19] [४] ॥ ध्रु ॥

1. तिअड्डा ∠ त्रिवृत्ता has been rendered in Tib. ka mgo 'the tip of a support'; it is perhaps the tip of the female organ which forms a triangle. 2. अङ्कवाली ( Hindi अँकवार ) ∠ अङ्कपाली 'a seat in the lap; hence an embrace'; 'khyun la byen 'to embrace'. 3. विआली ∠ विकाली 'timeless'; dus min rgon mo 'timeless evening'. 4. °हिँ =अपि has been rendered in Tib. as rgyan 'distance' is to be corrected as kyan 'also'. 5. o byed 'to kiss'. 6. खेपहुँ is in निमित्तसप्तमी । It has been, therefore, rendered in Tib. 'phans nas =क्षेपात् । 7..7. len mi śes pa= लेअ न जाअ 'not able to take'. The commentary holds the reading as लेपन जाअ for it explains this

त्रिकूलं पीडयित्वा (=चापयित्वा ) योगिनि देहि अङ्कपाली ।
कमलकुलिशं घर्षयित्वा करोमि विकालिकीं ॥१॥

योगिनि त्वया विना क्षणमपि न जीवामि ।
तव मुखं ( परि- ) चुम्ब्य कमलरसं पिबामि ॥

क्षेपे योगिनी लेपं न याति ।
मणिकुलं वाहयित्वा उड्डियानं समापद्यते ॥२॥

श्वश्रूं गृहे क्षिप्ता [ अवरुध्य ] कुंच- [ कुंचिका ] तालकेन ।
चन्द्रसूर्ययोः द्वयोः पक्षौ पाटय ॥३॥

वदति गुंडरिः अहं 'कुन्दुरे' ( =द्वीन्द्रियसमापत्तौ ) वीरः ।
नृणां नारीणां मध्ये उद्धृतं चीरं ॥४॥

as मोहमलावलिप्ता भवति । H. जाय is the reading with यश्रुति for जाअ । 8. Tib. म-फि-कु-ख्ड-ल । 9. Phyi 'afterwards'. 10. U-rgyan which is the regular transcription of उड्डियाण or ओड्डियाण । 11. sñam =सम =like (?) ; H. संगाअ to be corrected as समाअ for the commentary explains it as प्रविशति । 12. घालि < Prākṛt root घल्ल =क्षिप् 'throw'. घाल in Bengali means 'to injure' ; in Hindi it has two meanings 'to put' and 'to kill'. Tib. rendering 'go' 'understand, to perceive mentally' is doubtful. 13. कोञ्चा < कुञ्च 'crooked' has been rendered in Tib. as 'lde kyog' which is very literal. 14. ताल 'a bolt' is in Tib. version lde mig 'a key or a lock'. 15. फाल < Prākṛta फाड or फाल < पाटय causative of पट् 'tear' ; compare Hindi फाड़ना, फटना ; Bengali roots फाट्, फाड़् ; Tib. rendering glegs can < फलक 'a board' is to be corrected as 'bregs can' 'to cut asunder'. 16. H. अहे । 17. H. मझे । 18. rtags mtshan btsugs 'planted the mark' 19. The Carya is in raga अरु rendered in Tib. skya ren 'अरुण' ।

[१] तमेवार्थं श्रीहेरुकचर्या[20]श्वगमेन गुण्डरीपादा अन्येषु निःस्वभावं प्रतिपादयन्ति। तिय(?अ) डा (?ड्डा) इत्यादि। ललना रसना अवधूतिका नाड्यः। त्रिनाड्यां चापयित्वा निराभासीकृत्य सैव परिशुद्धावधूतिका निरात्मयोगिनी। अङ्कवालीति। अङ्कं स्वचिह्नं साधकाय ददाति। तं पालयति च। अथवा विचित्रादिलक्षणयोगेनानन्दादिक्रमं ददाति। पुनः सैव भावकस्याविरताभियोगादाश्वासं ददाति। कमलकुलिशमिति। भो योगिवर सम्यक्कुलिशाब्ज-संयोगघृष्टौ आनन्दसन्दोहतया। विकालिमिति। कालरहितां महामुद्रां सिद्धिं साक्षात्कुरु॥

[प्र॒] अतएव महासुखलम्पटो ऽहं भावकः [इति विज्ञापयितुम्] एवं वदति। भो नैरात्म्ययोगिनि त्वया विना क्षणैकं दुर्वारवेगचपलत्वात् प्राणवातधारणे न समर्थो ऽहं। तथा च आगमः—

उत्पादस्थितिभङ्गेषु अन्तराभवसंस्थितिः।
यावती कल्पना लोके वायुचित्त[21]विजृम्भितं॥

तव वक्त्रं सहजानन्दं पुनश्चुम्बयित्वा। कमलरसमिति उष्णीषकमलमधुमदनं परमार्थबोधिचित्तं। गुरुसंप्रदायाद्विरमानन्दकालिञ्जरसमये करोमि। तथा च श्रीहेवज्रे—

अभव्यं डिण्डिमं प्रोक्तं भव्यं कालिञ्जरं मतं॥

[२] पदान्तरेण योगिन्या अनुशंसामाह। खेपेत्यादि। क्षेपात् स्वस्थानयोगात् सा बोधिचित्तरूपा नैरात्मयोगिनी विलक्षणशोधितानन्देन मणिमूलेन मोहमलावलिप्ता भवतीति। पुनस्तस्मिन् क्रीडारसमनुभूय मणिमूलादूर्ध्वं गत्वा महासुखचक्रे अन्तर्भवतीति। अतः कृष्णचार्यपादैर् अभिहितं—

एहु सो गिरिवर कहिअ मइ एहु से महासुह ठाव।
एक्कु रअणि महु सहज खण लभइ महासुह जाव॥[22]

[३] तृतीयपदेन परिशुद्धिमाह। सासु घरे[23] इत्यादि। प्रथमं तावद् योगीन्द्रेण देवतायोगपूर्वकं कायवज्रं दृढीकृत्य वज्रजापोपदेशेन चन्द्रसूर्ययोः पक्षग्रहं खण्डयित्वा वाग्वज्रं स्थिरीकृत्य चित्तवज्रदृढीकरणाय सा विरमानन्दावधूतिका सहजानन्दैकलोलीभावेन[24] श्वासम् आगारं सुमेरुशिखरं

20. ॰चर्या॰ is omited in Tib. 21. H. वायुश्चित्त॰. 22. *Kāṇhapāda: Dohākoṣa* verse 26. 23. Omited in the text. 24. H. भावं न; no bos = भावेन।

नीत्वा। कुश्चिकेति। तालसंपुटीकरेण मणिमूलद्वारनिरोधं कर्तव्यम् [इति] आत्मानं संबोध्य स्वयमेव वदत्यनुपूर्विका। तथा च कृष्णचार्यपादाः—

जइ पवण गमण दुआरे दिढ़ ताला वि दिज्जइ।
जइ तसु घोरान्धारे मण दिवहो किज्जइ॥
जिण रअण उअरेँ जइ सो वह अम्बरु छुप्पइ।
भणइ काण्ह भव भुञ्जन्ते णिव्वाणो वि सिज्झइ॥[25]

[४] वज्रोपम समाधिसाक्षात्करणेन[26] सिद्धाचार्यो हि गुण्डरी [27]स्वयमेव अनुशंसामाह। भण इत्यादि। अन्येषां संप्रदायबहिर्मुखयोगिनीयोगिनां मध्ये कुन्दुरेण द्वीन्द्रियसमापत्तियोगाक्षर-सुखेन क्लेशारिमर्दनाद् वीरो ऽहं। पुनरपि तेषां मध्ये। चीरमिति। योगिन्द्रचिह्नमच्छगुणंत्वर्यादि मयोद्धृतमभिज्ञासंदर्शनार्थं॥०॥४॥

[चतुर्थ्यां चर्यागीत्यां टीका॥]

25. *Kāṇhapāda : Dohākoṣa*, verse 22 ; H. has many incorrect readings here. 26. H. ०कारणेन। 27. H. गुड़री।

॥५॥

[ रागगुर्ज्जरी चाटिलपादानाम् । ]

भवणइ गहण[1] गम्भीर वेगेँ वाही ।
दु आन्ते चिखिल[2] मझे न थाही ॥ [१]

धामार्थे चाटिल साङ्कम गढ़इ[3] ।
पारगामि लोअ निभर तरइ ॥ [ ध्रुवपद ]

फाड्डिअ मोहतरु पाटि जोडिअ ।
अदअ दिढ[4] टाङ्गी निवाणे कोहि[?ड़ि]अ ॥[5] [२] ध्रु ॥

साङ्कमत चड़िले दाहिण वाम मा होही ।
नियड्डी बोहि दूर मा जाही ॥ [३] ध्रु ॥

जइ तुम्हे लोअ हे होइब पारगामी ।
पुच्छइ[6] चाटिल अनुत्तर[7] सामी[8] ॥ [४] ध्रु ॥

1. kloṅ bcas =सावर्त 'with whirls'. 2. rab 'dreṅ (?). 3. H. गढइ. 4. H. दिटि ; brtan par =दृढ. 5. bzod gṅis (?) kyis ni brtan per mya ṅan 'das pa phug [ (?) phig ]. phig 'cut asunder, भिद् ; कोहिअ to be read as कोड़िअ if the amendment is accepted. The commentary explains as करोति (?). 6. H. पुच्छतु. 7. bla med byañ chub =अनुत्तरबोधि. 8. सामी ∠ स्वामी is omited in Tib.

भवनदी गहना गंभीरा वेगेन वाहिनी ।
द्वयोरन्तयोः पंको मध्ये न गाधता ॥१॥

धर्मार्थं चाटिलः संक्रमं ( =सेतुं ) घटयति ।
पारगामी लोकः निर्भरं तरति ॥

पाटयित्वा मोहतरुं फलकं योजयित्वा ।
अद्वय-दृढ-परशुना निर्वाणं कल्पयति ॥२॥

संक्रमम् आरुह्य दक्षिणं वामं मा भव ।
निकटे बोधिः दूरं मा याहि ॥३॥

यदि यूयं लोकाः हे "भविष्यामः पारगामिनः" [ इति इच्छत तर्हि ] ।
पृच्छत चाटिलं अनुत्तरस्वामिनं ॥४॥

[१] तमेव यथाभूतार्थं चाटिलपादाः शब्दान्तरेण प्रकटयन्ति । भवणइ इत्यादि । पूर्वोक्त ललनारसनाद्यामासत्रयं[9] पारावारगंभीरत्वेन नदी संन्ध्यया बोद्धव्यं । दिवा रात्रौ च सन्ध्यायां विषयोल्लोलमुत्पद्यते विनश्यति च । अतएव गहनं भयानकं । प्रकृतिदोषाद् गमीरं । षट्पथद्वारेण मूत्रपुरीषादिकं च प्रवहतीति । अतएव अन्तद्वयं पारावारं वामदक्षिणं चिखिलमिति प्रकृतिदोषपङ्कानुलिप्तं । मध्ये तस्याः थाहं अवधूत्याः प्रमाणस्वरूपं कर्तुं न पार्यते बाल्योगिना ॥

[ध्रु] ध्रुवपदेन चतुर्थानन्दमुद्दीपयन्नाह । धर्मार्थं । स्वलक्षणधारणात् धर्मः । घटपटस्तंभकुम्भादिभूतविकारः तस्य स्वरूपेण नास्ति रूपमिति **श्रीहेरुकतन्त्रतत्त्वपटलोक्त**-विचारानुपलंभतया । चाटिलसिद्धाचार्यः संक्रममिति संवृतिपरमार्थयोरैक्यं गुरुसंप्रदायाद् घटयति । तथा च **सरहपादाः**—

सुण्ण करुण जइ जोउ ण सक्कइ ।
णउ भवे णउ णिव्वाणे थक्कइ ॥
अहवा करुणा केवल भावइ ।
जम्मसहस्सहि मोक्ख न पावइ ॥[10]

अनेन सिद्धाचार्योपायेन मोक्षोत्सुका ये योगिनः तेऽपि नियतं संसारसमुद्रस्य पारं गच्छन्तीति ॥

---

9. H. ०भाष० । 10. *Sarahapādīya-Dohāsaṃgraha* verses iv and v. See the notes there.

[२] पदान्तरेणोक्तार्थव्यक्तिकरणमाह । फाडिअ[11] इत्यादि । मोहतरुं विषयं व्यावृत्तिवशात् तमेवसंवृतिबोधिचित्तवृक्षं पाटयित्वा तस्य विषयग्रहं खण्डयित्वा सततालोकं पाटकेन सह एकीकरणं घटयति । पुनरस्य फलप्रतिपादनाय युगनद्धपरशुना दृढं करोतीति ॥

[३] तृतीयपदेन मार्गस्य अनुशंसामाहुः । साङ्कम इत्यादि । स्वाधिष्ठानप्रभास्वरयोरैक्यं संक्रमं जिनस्य[12] सत्त्वानां संसारसमुद्रपारकारणाय । भो योगिनः तत्रारूढे सति वामदक्षिणचन्द्र-सूर्याभ्यासौ पूर्वं वज्रजापं निरोधात् पुनरपि पश्चाद्भावं मा चिन्तयिष्यथ । एतेनाभ्यासवशेन बोधि-महामुद्रासिद्धिर्न दूरतरा । अतीव संनिहितेव [13]मा [ऽ]य तथा दूरं मा गच्छथ इत्यर्थः[13] ॥

[४] योगास्पदेन चतुर्थपदमाह । जइ तुम्हेत्यादि । आभासत्रयमहामोहनद्याः पारगमनं यदीष्यते भो योगिनस्तदा सिद्धाचार्योपदेशपारम्पर्येणानुत्तरधर्मस्वामिनमाह—पृच्छथेति । अतएव सहजानन्दोपदेशं जानाम्यहं निश्चितमिति । अन्ययोगिनस्तथाविधं न जानन्ति पुस्तकदृष्ट-गर्वत्वात् । तथा च कृष्णाचार्यपादैर् अभिहितं दोहाकोषे—

सहज एक्कु पर अत्थि तहि फुड़ काण्हु परिजाणइ ।
सत्थागम बहु पढ़इ सुणइ वढ़ किम्पि ण जाणइ[14] ॥५॥

[ पंचम्यां चर्यागीत्यां टीका ॥ ]

11. H. फाडिअ । 12. Tib. for जिन reads skye bo =जन । 13...13. मा अय is in लोट् (=imperative mood) and has been explained in लट् ( =present tense ) by the verb गच्छथ। Besides the former in singular but latter has been put in plural. 14. *Kāṇhapāda* : *Dohākoṣa*, verse 12.

॥६॥

[ राग पटमञ्जरी भुसुकुपादानाम् । ]

काहे रे[1] घेणि-मेलि[2] अच्छहु [ँ ] कीस ।
वेढ़िल हाक पड़अ चौदीस ॥ [१]

अपणा मांसेँ हरिणा वैरी ।
खणह न छाड़अ [3]भुसुक अहेरी[3] ॥ ध्रुवपद ॥

तिण न च्छुपइ हरिणा पिवइ न पाणी ।
हरिणा हरिणीर निलअ न जाणी ॥ [२] ध्रु ॥

हरिणी बोलअ सुण हरिणा[4] तो ।
ए वन च्छाड़ी होहु भान्तो ॥ [३] ध्रु ॥

तरसँन्ते[5] हरिणार खुर न दीसइ ।
भुसुकु भणइ [6]मूढ हिअहि न पइसइ[6] ॥ [४] ध्रु ॥

1. काहे is *Deśi* word for कदा, रे is a vocative particle. H. काहेरि; Tib. rendering gaṅ zas la 'केन भोक्तुं' or कस्य भोजने or कस्य भोजनाय or कस्य भोजनं' suggests that the text was taken as का+आहारे 'कस्य आहारं or ०राय or ०रे'. As the Commentary paraphrases it by अनादिकालमादाय so the reading may be restored by काहे रे। 2. Compare Hindi घुलमिल। The phrase made of two roots घे ∠ ग्रह् 'Seize' and मेल ∠ मिल् 'mix, gather' has been rendered into Tib. phrase dus nas having only one root 'dus pa' 'gather'. Lit. meaning to mix or put together makes no sense here. Mixing here means want of distinction or carefulness as the commentary explains it by the word असंप्रजन्यदोष 'a fault in the form of absence of mindfulness'.

2537

कदा प्रभृति मो अविविच्य तिष्ठामि कीदृशः ।
वेष्टित आह्वानं पतितं [ शृणोति ] चतुर्दिशः ॥१॥

आत्मनो मांसे हरिणो वैरी ।
क्षणमपि न त्यजति भुसुक आखेटिकः ॥

तृणं न स्पृशति हरिणः पिबति न पानीयं ।
हरिणो हरिण्या निलयं न जानाति ॥२॥

हरिणी वदति शृणु हरिण त्वं ।
एतद्वनं परित्यज्य भव भ्रान्तः [ पलायितः ] ॥३॥

त्रासात् हरिणस्य खुरं न दृश्यते ।
[ यद् ] भूसुकुः वदति [ तद् ] मूढहृदयं न प्रविशति ॥४॥

[१] तमेवार्थं परार्थाय करुणान्दोलितचित्तेन भुसुकुपादो हरिणाशब्दसन्ध्याभाषया कथयति । काहेरेत्यादि । अनादिकालमादायासंप्रजन्यदोषेण मृत्युमारविषावेष्टितः [?०वेन] सन् [?सता] मारमारेति हाकं मम चित्तहरिणेन श्रुतं । इदानीं [ सद्- ] गुरुचरणरेणुप्रभावात् तं विहाय सर्वधर्मानुपलंभतया ग्राह्यग्राहकाभावत्वात् क्वापि गृहीत्वा मुक्त्वा स्थितो ऽहम् ॥

[ध्र] ध्रुवपदेन दृढयति । अपणेत्यादि । अतएवं स्वयंकृताविद्यामात्सर्यदोषेण चाञ्चल्यतया पुनः स एव चित्तहरिणः सर्वेषां बद्धवैरी । क्षणमपि चित्तं चित्तहरिणं विहाय [ न तिष्ठति ] भुसुकुपादाखेटिकः । सद्गुरुचरणबाणेनान्यं प्रहरति तमे[?दे]वमिति । तथा च **बोधिचर्यावतारे**—

इमं चर्मपुटं तावत् स्वबुद्ध्यैव पृथक्कुरु ।
अस्थिपञ्जरतो मांसं प्रज्ञाशस्त्रेण मोचय ॥7

3...3. H. भुकुम्ब हेरि । Cf. the commentary : भूसुकपादाखेटिकः । 4. H. हरिआ ; ri dags 'हरिण' ; Tib. adds rtsva med 'तृणशून्य, अतृण' before हरिण 5. H. तरङ्गन्ते contrary to तरसन्ते the reading of the original Ms. ; 'phyoṅs shin brgyugs pas 'संत्रस्तधावनात्' । 6...6. H. मूढा हिअ हि ण पइसई ; blun sñin la mi 'jug 'मूढहृदयं न प्रविशति । 7. *Bodhicaryāvatāra* 5. 62.

अस्थीन्यपि पृथक् कृत्वा पश्य [8]मज्जानमन्ततः[8] ।
किमत्र सारमस्तीति स्वयमेव विचारय ॥[9]

[२] चित्तहरिणस्य निःसंशयं प्रतिपादनाय आह । तिण न खंडइ [ ?-छुपइ ][10] इत्यादि । यथा बाह्य मृगैः तृणच्छेदनिर्म्भरपानं क्रियते तद्वत् चित्तहरिणं[11] न करोति । विशिष्य विचार-स्वरूपेण तयोः चित्तपवनयोः निलयं[12] निवास इन्द्रियद्वारेण नावगम्यते । तथा च कृष्णाचार्यपादैर् अभिहितं दोहाकोषे—

वर गिरि सिहर उतुङ्ग मुणिसवेँ जहिँ किअ वास ।
णउ सो लंघिअ पञ्चाणणेहि करिवर दुरिअ आस ॥[13]

[३] तृतीयपदेन कायपवनविषयपल्लवोपसंहारमाह । हरिणीत्यादि । [ षड् ][14] विषयान् भवग्रहान् हरति खण्डयति [ इति ] हरिणीति सन्ध्याभाषया सैव ज्ञानमुद्रा । नैरात्म्यभावकस्य अभ्यासप्रकर्षवशाद् आश्वासं [ अवलम्बयति ][15]—भो चित्तहरिण अस्य कायवनस्य कायगृहं विहाय यन्महासुखकमलवनं [ तत् ] गत्वा [ भव ] विश्रान्तो ऽविकल्पैश्[16] च चर[16] तथा च सहजसंवरे—

सर्वव्यापि निराभासि [ ?० सि ] करुणैकरसं मनः ।
आलिङ्गति झटित्येषा तृषस्यन्ती च शून्यता ॥

[४] चतुर्थपदेनाधिमात्राधिमात्रस्यानुशंसामाह । तरसैते[17] हरिणा इत्यादि । सहज-ज्ञानावबोधेन योगिनस्तस्य स्वचित्तहरिणस्यावयवादिविकल्पं न कल्पयन्ति । येऽपि बहिः शास्त्रागमाभिमानिनः पण्डितास्ते ऽप्यस्मिन् धर्मे संमूढा दूरतराः । भुसुकुपादसिद्धाचार्यो हि वदति

8...8. H. ज्ञानमनन्ततः । 9. *Bodhicaryāvatāra* 5. 63. 10. छुप् < छुब् < छूना in Hindi; The commentary quotes खंडइ for छपइ । 11. It is for चित्तहरिणः through लिङ्गविपर्यास । 12. It is for निलयः through लिंगविपर्यास । The विपर्यास of लिङ्ग, वचन and पद etc. are numerous in the commentary not to be noted everywhere. They have been noticed only in the places where the construction is confounding. 13. *Kāṇhapāda : Dohākoṣa*, verse 25. 14. Tib adds. 15. Ser [ ? Seṅ ] bar byed do. 16...16. H. चचार । 17. H. तरंगते, phon shing 'gyug pas 'संत्रासात् or संत्रासधावनात् ।

तेषां हृदये किञ्चित् तत्त्वोन्मीलितमात्रं न भवतीति। यदुक्तं भगवता चतुर्देवीपरिपृच्छा-महायोगतन्त्रे—

चतुरशीतिसाहस्रे धर्मस्कन्धे महामुनेः।
तत्त्वं ये न जानन्ति ते सर्वे निष्फलाय वै ॥०॥६॥

[ षष्ठ्यां चर्यागीत्यां टीका ॥ ]

॥७॥

[ रागपटमञ्जरी काह्नु पादानाम् । ]

आलिएँ[1] कालिए[2] बाट रुन्धेला ।
ता देखि काह्नु विमन[3] भइला ॥ [१]

काह्नु[4] कहिँ गइ करिब निवास ।
जो मनगोअर सा उआस[5] ॥ ध्रुवपद ॥

ते तिनि[6] ते तिनि[6] तिनि हो भिन्ना ।
भणइ काह्नु भव परिच्छिन्ना ॥ [२] ध्रु ॥

जे जे आइला ते ते गेला ।
अवणागवणे[7] काह्नु विमन भइला[8] ॥ [३] ध्रु ॥

हेरि से काह्नि निअड़ि जिनउर वट्टइ ।
भणइ काह्नु मो हिअहि[9] न पइसइ ॥ [४]

1. H. अलि एँ ; 'jigs byed 'भीतिकर' stands for आलि। 2. H. कलि एँ ; dus mtshan ma 'काललक्षण' stands for कालि which suggests that Tib. Translator sees काल in कालि। 3. sems ni rnam mi dga' 'very displeased in mind' =विमनस्। वि+मनस् =(1) bad or sad mind (2) विशिष्टमनस् 'superior mind', the latter meaning is taken by the Commentary. 4. Transcribed in Tib. as काह्न। 5. Snoms 'in difference, fatigue' =उदास < उआस 6. khams gsum 'त्रिधातु' viz. ; काम, रूप and अरूप। The commentary explains त्रिधातु as स्वर्ग, मर्त्य and रसातल। H. reads two words ते and तिनि into one तेतिनि. 7. Compare Hindi आवागमन। Tib. Translator takes the phrase as अपणागमणे =आत्मन आगमने and renders as bdag ñid loṅs nas 'on account of the rise of अहंकार or अहंत्व 'the nature of the self'. 8. H. भइईला। 9. bdag gi sñiṅ 'मम हृदये= मो हिअहि'। H. reads two words मो and हिअहि into one मोहिअहि।

आलिना कालिना वर्त्म रुद्धं ।
तद् दृष्ट्वा कृष्णः विमनाः भूतः ॥१॥

कृष्णः क्व गत्वा करिष्यामि निवासं ।
यो मनोगोचरः स उदासः ॥

ते त्रयः ते त्रयः त्रयः भो भिन्नाः ।
वदति कृष्णः भवः परिच्छिन्नः ॥२॥

ये ये आगता ते ते गताः ।
आगमने गमने कृष्णः विमनाः भूतः ॥३॥

अरे तत् कृष्ण ! निकटे जिनपुरं वर्तते ।
वदति कृष्णः मम हृदये न प्रविशति ॥४॥

[१] जगदर्थकरुणाभाव[10]स्तिमितहृदयाः कृष्णाचार्यपादास्तमेवार्थं विशेषयितुमाहुः । आलीत्यादि । उक्तार्थस्वदेवतायोगपूर्वकवज्रजापोपदेशं लब्ध्वा कृष्णाचार्येण आलिना लोकज्ञानेन कालिना लोकाभासेन च एकीकृत्य अवधूतीमार्गं सुदृढं रुद्धं[11] । पुनः सद्गुरुप्रसादात् प्रकृति-परिशुद्धावधूतिकारूपेण कृष्णाचार्यपादा विशिष्टमनसो भूताः ॥

[ध्रु] काह कहिँ गइ इत्यादि ध्रुवपदेन निजवासारोपेण खण्डनमाहुः । स्वयमात्मानं संबोध्य वदन्ति भोः कृष्णवज्रपादाः व्याप्यव्यापकरूपेण महासुखेन व्यापितं जगद् इति । श्रीमद्धेरुकतन्त्रराजोक्तार्थमामुखीकरणात् कुत्र स्थाने ऽस्माभिर्निवासः करणीयः स तन्मयत्वात् । ये ऽपि योगिनो मनोगोचरा मनेन्द्रिय[?मनइन्द्रिय]बोधप्रधाना भवन्ति तेऽप्यस्मिन् धर्मे उदासाः सुदूरतरा एव । तथा च **सरहपादाः** :—

जहि मण पवण ण सञ्चरइ रविससि णाह पवेस ।
तहि वढ चित्त विसाम करु सरहें कहिअ उएस ॥[12]

10. H. भार । 11. H. रुद्धतं । 12. *Sarahapāda : Dohākoṣa* verse 25. ; H. जाहि मण पवण न सञ्चरइ रवि शशि नाहि पवेश । तहि घट चीअ विसामकर सरहेँ कहि उववेस ॥

[२] द्वितीयपदेन तं द्योतयन्त आहुः ते तिनि इत्यादि। बाह्ये स्वर्गमर्त्यरसातलं अध्यात्मे कायवाक्चित्त—दिवारात्रिसन्ध्यायोग—योगिनीतन्त्रादिकं बोद्धव्यं। एतैरन्योन्यं महासुखव्यापकत्वेन भेदोपलब्धिलक्षणं नास्ति योगिनां परमार्थविदां। तथा च **आगमः**—

स्वर्गमर्त्यपातालमेकमूर्तिं भवेत् क्षणात्।

इति वचनात्। एतदर्थं[ ][13] **चर्या[गीति]**[14]**पादेनोक्तमस्ति**—

सातेँ तिसेँ नव तिसेँ [आठेँ][15]।
एँ तिअ मण्डल नाहि विसेषे॥

इत्यादि विस्तरं सकलधर्माधिगमनेन कृष्णाचार्यपादा वदन्ति भवविकल्पच्छेदका वयमिति॥

[३] तृतीयपदेन स्वकीयानुशंसमाहुः। जे जे इत्यादि। ये ये भावा उत्पन्नास्ते ते भावा विलयं गताः। तेषाम्[16] उत्पादभङ्गेषु संवृतिसत्यस्वभावपरिज्ञानेन गुरुप्रसादत्वात् कृष्णाचार्यचरणा विशिष्टमनसः परिशुद्धभूताः। तथा च **आगमः**—

भवस्यैव परिज्ञाने निर्वाणमिति कथ्यते॥

[४] चतुर्थपदेन चात्मानुशंसामाहुः। हेरि से इत्यादि। स्वयमात्मानं संबोध्य वदन्ति भो कृष्णवज्रपादाः पञ्चक्रमानुपूर्व्या पुनर्जिनपुरं महासुखपुरं अतीव मम संनिहितं वर्तते। तथा च **नागार्जुनपादाः**—

उत्पत्तिक्रमसंस्थानां उत्पन्नक्रमकाङ्क्षिणां।
उपायश्चैष संबुद्धैः सोपानमिव निर्मितः॥०॥७॥

[ सप्तम्यां चर्यागीत्यां टीका॥ ]

13. H. एतदर्थं०। 14. glu dbyaṅs 'गीति' is added by Tib. before पाद०। 15. sum cu brgyd. 16. H. एषाम्; de rnams 'ते, they'.

॥८॥

[ राग देवक्री[1] कम्बलाम्बर[2] पादानाम् । ]

सोने भरिती करुणा नावी[3] ।
रूपा थोइ [4]नाहिक ठावी[4] ॥ [१]

बाहतु[5] कामलि गअण उवेसे ।
गेला जाम बाहुड़इ[6] कइसें ॥ ध्रुवपद ॥

खुण्टि[7] उपाड़ी मेलिलि[8] काच्छि[9] ।
बाहतु कामलि सद्गुरु पुच्छि ॥ [२] ध्रु ॥

माङ्गत[10] चड़्हिले[11] चउदिस चाहअ[12] ।
केड़्आल[13] नाहि के कि बाहवके पारअ ॥ [२] ध्रु ॥

वामदाहिण चापी मिलि मिलि माङ्गा[14] ।
बाटत मिलिल महासुख साङ्गा[15] ॥ [४] ध्रु ॥

1. lha rnams rol pa 'देवक्रीडा' । 2. la wa'i na bza can 'one who has woollen cloth'. 3. gru 'नौका' । 4...4. It is the restored reading for H. महिके ठावी as Tib. rendering is gnas ñid med par gyur 'नास्ति हि स्थानम्' । 5. 'gro 'गच्छ' । 6. Compare बहुरे and बहुरइ in *Avadhī*-phrases : जइस उनके दिन बहुरे तइस सबके दिन बहुरइँ 'May everybody's [ good ] days return as did theirs'. Slar yaṅ...'byuṅ 'once again becomes'. H. बहु उइ । 7. gru yi brtod 'the peg of the boat' ; Compare Hindi खूँटी as well खूँटा । 8. To be derived from Prakrit root मिल्ल् 'मुच् श्लथ्, loosen'. 9. ñag thag 'a rope' ; Modern Bengali काछि । 10. gru yi mjug la 'the hinder part of the boat' ; माङ्ग to be compared with Prakrit मग्ग and Marāṭhī मग 'beside, behind'.

स्वर्णेन भरिता करुणा नौका।
रूपं स्थापयितुं नास्त्येव स्थानं ॥१॥

वाहयतु कम्बलः गगनोद्देशे।
गतं जन्म व्याघुटति कथं ॥

कूपकमुत्पाटयित्वा मोचयित्वा रज्जुं।
वाहय कम्बल सद्गुरुं पृष्ट्वा ॥२॥

मङ्गे आरुह्य चतुर्दिशं पश्यति।
अरित्रं नास्ति केन कः वाहयित्वा पारयति ॥३॥

वामदक्षिणं चापयित्वा प्रवेश्य प्रवेश्य मार्गं।
वर्त्मनि मिलितो महासुखसंगः ॥४॥

[१, ध्रु] परमकरुणानन्दमुदितहृदयकम्बलाम्बरपादाः करुणाराज्येन तमेवार्थं द्योतयन्त आहुः। सोनेत्यादि। करुणेति संध्याभाषया तमेव[16] बोधिचित्तं। नावीति उत्प्रेक्षा[17]लङ्कारपरं बोद्धव्यं। तां तदात्मतया सर्वाकारवरोपेतशून्यतया सद्गुरुप्रसादरसं संपूर्य महासुखचक्रगमन-समुद्रोद्देशेनात्मानं संबोध्य सिद्धाचार्यकम्बलाम्बरपादा वाहयन्ति। रूपेत्यादि। रूपवेदनासंज्ञा-संस्कारविज्ञानादीनां अनेन स्थानभेदं नास्ति। सर्वमेव तन्मयत्वात्। एतेन चतुर्थोपायनौवाहनेन विना मम सिद्धाचार्यस्य गतं जन्मान्तरं व्याघुटतीत्यर्थः। इत्यात्मानं संबोध्य वदति कम्बलाम्बरपादः। निर्विकल्पप्रवाहाभ्यासं कुरु। तथा च **अप्रतिष्ठानप्रकाशे**—

याावान् कश्चिद् विकल्पः प्रभवति मनसस्त्याज्यरूपो हि तावान्
यो ऽसावानन्दरूपः परमसुखकरः सोऽपि सङ्कल्पमात्रः।

11. H. चन्हिले; shon pa 'ascend'. 12..12. mtshen (? mtshed) shin 'gro 'falls into the tomb or pit, विलं पतति' is not in verbal agreement with the text and also with its commentary which explains as—चतुर्दिशं ग्राह्यादिविकल्पे......संसारे पतति। 13. gru skud =नौदण्ड। 14. H. मागा is a later form of माङ्गा; see also note 10. 15. H. स (ङ्ग) ङ्गा; 'grogs 'संग, companion'. 16. तम् stands for तद्। 17. उत्प्रेक्षा here stands for रूपक and has been translated in Tib. by the word 'gjugs' ='रूपक'।

यो वा वैराग्यभावास्[18]तदपि तदुभयं[18] तद्भवस्याग्रहे तु ।[19]
निर्वाणं नान्यदस्ति क्वचिदपि विषये निर्विकल्पात्मचित्तात् ॥

तथा च **बोधिचर्यावतारे**—

मानुष्यं नावमासाद्य तर दुःखमहानदीं ।
मूढ कालो न निद्राया इयं नौर्दुर्लभा पुनः ॥[20]

[२] पदान्तरेण तमेवार्थं द्योतयन्नाह । खुण्टीत्यादि । प्रथमे खुण्टिकां आभासदोषं गुरुवाक्येन[21] दृढीकृत्य उत्पाट्य [22] भो योगिवर कच्छिकां[23] विद्यासूत्रं च मुक्तीकृत्य द्रुतं तस्याः प्रवाहं कुरु । एतेन आभासविशेषेण अनुत्तरधर्मं साक्षात् [ करोति ][24] । [25]वाटिकाचित्तो हि भवति[25] इति नात्र संशयः ॥

[३] तृतीयपदेन गुरोरसम्प्रदायात् विपर्यासमाह । माङ्गतेत्यादि । मार्गं विरमानन्दं गत्वा चतुर्दिशं प्राप्यादि वि[कल्पे यदात्मदृष्टिं जनयति तदा गुरूपदेशविरहात् सहजातस्वभावेन प्रव्रजति महासुखचक्रं गन्तुं न प्रभवति पुनरपि खलु ][26] संसारे पतति । तथा च **[कृष्णाचार्यस्य]**[27] **चर्या[गीति]**[28]**पादः**—

खालते पडिलें कापुर नाशइ ॥[29] इति ।

18...18. dṅos med de yaṅ de gñis la 'तदपि तदुभयं निःस्वभावं' । 19. H. does not divide तु fom ॰ग्रहे । 20. *Bodhicaryāvatāra* 7. 14. 21. H. गुरुवाक्ये ; bla ma'i gsuṅ gis =गुरुवाक्येन । 22. H. उत्पाट्य(द्य) ; bskyed par bya'o 'having produced ; उत्पाद्य' is quite contrary to the Caryā-text उपाड़ी =उत्पाट्य । 23. H. कच्छिकासु । 24. byed par 'gyur te. 25...25. omitted in Tib. ; the expression वाटिकाचित्त is not clear. 26. gzuṅ. ba. daṅ. 'dsin. pa. la. sogs. pa'i. rnam. par. rtog. pa. la. gal. te. lta. shing. rtog. par. byed. na. d'ei. tshe. bla. ma'i. gsuṅ. gi. mñam. pa. daṅ. bral. bas. lhan. cig. skyes. ba'i. ṅo. bo. ñid. kyis. rab. tu. bgrod. pa. bde. ba. chen. po'i. 'knor. lor. 'gro. bar. mi. nus. te. slar. yaṅ. 27. nag po spyod pa'i. 28. glu dbyaṅ. 29. 'प्रणाल्यां पतित्वा कर्पूरं नश्यति' इति च्छाया ।

यः पुनः सद्गुरुचरणेन पविपङ्कजसुखान्वेषणं करोति स भवजलधौ पारं गच्छतीति। तथा च कृष्णाचार्यपादाः—

जो संवेअइ मणरअण अहरह सहज फरन्त।
सो परु जाणइ धम्मगइ अण्ण कि मुणइ कहन्त ॥[30]

[४] चतुर्थपदेन फलव्यक्तीकरणमाह। वामदाहिनेत्यादि। वामदक्षिणमाभासद्वयं मध्यमायां प्रवेशयित्वा[31] मार्गविरमानन्दगतं बोधिचित्तं निजज्ञानपरिशोधितं महासुखचक्रमुद्दे शेन यदामिलितं तस्मिन् मार्गे [ तदा ] महासुखसङ्गनैरात्म्यज्ञानाभिसं[?षं]गं मया प्राप्तमिति ॥०॥८॥

[ अष्टम्यां चर्यागीत्यां टीका ॥ ]

30. *Kāṇhapāda : Dohākoṣa*, verse 16. 31. Stands for प्रवेश्य।

॥६॥

[ रागपटमञ्जरी[1] काह्नुपादानाम् । ]

एवंकार दिढ़ बाखोड़[2] मोड़िउ[3] ।
विविह विआपक बान्धन तोड़िउ ॥ [१]

काह्नु विलसअ आसवमाता ।
सहज नलिनीवन पइसि निविता[4] ॥ ध्रुवपद ॥

जिम जिम करिणा करिणिरेँ रिसअ[5] ।
तिम तिम तथता मअगल[6] वरिसअ ॥ [२] ध्रु ॥

छड़गइ सअल सहावे सूध ।
भावाभाव वलाग[7] न छुध[8] ॥ [३] ध्रु ॥

दशबलरअण हरिअ दशदिसेँ ।
अविद्याकरिकुँ[9] [10]दम अकिलेसेँ ॥ [४] ॥ ध्रु ॥

1. Tib. renders the name of *rāga* as pa-ṭa-ha'i tshegs pa 'पटमञ्जरी' ।
2. बा 'two' ∠ द्वा (compare बारह ∠ द्वादश etc) + खोड़ ∠ *Prākrit* खोड ; 'Hindi खूँटा= a post'. 3. मोडिउ or मोड़िउ as H. reads is derived from *Prakrit* root मोड= Hindi मोड़ना 'bend ; hence 'rub' break etc. ; ñed pa 'rub'. 4. Sems med 'निचिता ∠ निश्चित्त' । This indicates a state of mind when no thoughts arise. 5. रिसअ= ईर्ष्यति ; chags 'रज्यति, रागासक्तो भवति । 6. H. मअ गल ; मअगल ∠ मदकल 'rut' ; Tib. rendering ṅos 'gram 'side, corner' is not clear. 7. वलाग ∠ वालाग्र has been rendered in Tib. as 'chags=broken, hence a small part or a little. 8. छुध ( compare Hindi छूत=अशुद्ध ) has wrongly been rendered in Tib. dog 'शुद्ध' । 9. H. विद्याकरि दमकुँ ; rig pa'i glaṅ

एं-वं-कारं दृढं स्तंभं मर्दयित्वा भंक्त्वा वा ।
विविधं व्यापकं बन्धनं त्रोटयित्वा ॥१॥

कृष्णः विलसति आसवमत्तः ।
सहजनलिनीवनं प्रविश्य निर्वृतः ॥०॥

यथा यथा करी करिणीं करिण्यै वा ईर्ष्यति ।
तथा तथा तथतां मदकलः वर्षति ॥२॥

षड्गतयः सकलाः स्वभावे शुद्धाः ।
भावाभावौ वालाग्रं नाशुद्धौ ॥३॥

दशबलरत्नं हृत्वा दशदिशः ।
अविद्याकरिणं दमय अक्लेशेन ॥४॥

[१] घनानंदोत्कीर्णतया कृष्णाचार्यपादाः चित्तगजेन्द्रशब्दसंध्याभाषया तमेवार्थं उत्प्रेक्षयन्त आहुः । एवंकारेत्यादि । एकारः चन्द्रामासं वंकारः सूर्यः । उभयं दिवारात्रिज्ञानं बाखोड स्तंभद्वयं मर्दयित्वा निरामासीकृत्य । वज्रजापक्रमेण[11] अपरं विविधप्रकाराण्यवधूतीव्यापकबंधनानि तोडयित्वा ॥

[ध्र] एषां त्रयाणामनुपलंभासवपानेन [12]प्रमत्ताः सन्तः[12] ज्ञानगजेन्द्रकृष्णाचार्यचरणाः नलिनीवनं महासुखकमलं कृत्वा निर्विकल्पाकारे क्रीडन्तीति । तथा चार्यनागार्जुनपादाः—

बाह्यं यत्तदसत् स्वभावविरहाद् ज्ञानं च बाह्यार्थवत्[13]
शून्यं यत्परिकल्पितं तदपि चाशून्यं मतं केवलम् ।

dbaṅ 'विद्याकरीन्द्र ; The commentary अविद्याकरीद्र । 10...10. Tib. rendering 'ñon moṅs ñid kyis btsal =क्लेशेन दमय' indicates the reading दमय किलेसें for दम अकिलेसें । 11. rdo rje'i bzlas pas. 'वज्रजापेन' ; क्रम० is omitted in Tib. 12...12. H. प्रमत्त[ः] सन् ; The construction requires प्रमत्ताः सन्तः ; it is a typical example of विभक्तिलोप as well as वचनविपर्यास । 13. H. बीक्ष्य च्यवत् ; phyi rol don bshin 'बाह्यार्थवत्' ।

इत्येवं परिभाव्य भावविभवं निर्विण्ण[14]तत्त्वैकधी-
र्मायानाटकनाटनैकनिपुणो योगीश्वरः क्रीडति ॥

[२] पदान्तरेण तमेवाहुः । जिम जिमेत्यादि । यथा बाह्यकरी करिण्यामीर्ष्यामदं वहति । तद्वत् भगवती-नैरात्मा-संगतया चित्तगजेन्द्रकृष्णाचार्यपादास् तथतामदं वर्षन्ति ॥

[३] अत एव तृतीयपदेन भावाभावानां[15] स्वरूपोपलब्धिमाहुः । छडि[?ड]गइ इत्यादि । अंडजा जरायुजा उपपादुकाः संस्वेदजा देवासुरादिप्रकृतिकाः सर्वे भावाः स्वभावेन परिशुद्धा योगीन्द्रस्य । वालाग्रमपि अपरिशुद्धं किंचिन्न विद्यते । तथा च मध्यमकशास्त्रं[16]—

नापनेयमतः किंचित् प्रक्षेप्तव्यं न किंचन ।
द्रष्टव्यं भूततो भूतं भूतदर्शी विमुच्यते ॥

[४] चतुर्थपदेन परिपक्वकुशल[मूल][17]लक्षणमाहुः । दशबलेत्यादि । दशबलवैशारद्यादि-गुणयुक्तं तथतारत्नं दशदिग्व्यापकतया अनुभवाभ्यासबलेन हारितमस्माकं । अतएव तथतारत्नप्रभावेण अविद्याकरीन्द्रस्य अनासंगेन[18] दमनं[19] कुरु ॥०॥९॥

[ नवम्यां चर्यागीत्यां टीका ॥ ]

14. H. निर्विज्ञ० । 15. H. भावानां ; dṅos po daṅ dṅos po med pa'i 'भावाभावानां' । 16. H. ०शास्त्रः stands for शास्त्रं ; it is an example of लिङ्गविपर्यास । 17. rtsa ba =मूल । 18. mchags pa'i 'आसंगेन०, आसंगस्य' । 19. H. दमनं ( मदनं ) ; myos pa =मदन ।

विधत्ते। गणनमिति गुरुसंप्रदायात् महासुखकमलवनं गत्वा पुनरागत्य परमार्थबोधिचित्तमधुपानास्वादं करोति। तथा च परदर्शने भोजनाथः—

कहन्ति गुरु परमार्थेर बाट।
कर्म कुरंग समाधि कपाट॥
कमल बिकसिल कहिह ण जमरा।
कमलमधु पिबिबि धोके न भमरा॥

[४] चतुर्थपदेन वज्रगुरुमाहात्म्यमाह। तब सेत्यादि[25]। चित्तमूषकोऽयं तावदेव मोह्मानोऽगतो भवति। यावत् सद्गुरुवचनयन्त्रसंनिधानं न भवति। भो योगिन् तस्मात् गुरौ प्रणिधानमारभ्यतामिति। तथा च सरहपादाः—

यस्य प्रसादकिरणैरित्यादि॥

[५] पंचमपदेन चित्तमूषकस्य स्वरूपमाह। जबेमित्यादि। यस्मिन् समये सहजानन्द-चित्तमूषकस्याचारः अहमिति प्रत्यारोपयता त्रुट्यति। तस्मिन् समये संसारबन्धनं तस्य स्फिटमिति। तथा च आगमः—

[26]संसारो ऽस्ति न तत्त्वतस्तनुभृतां बन्धस्य [ चचैव ][27] का
बन्धो यत्र न [ यस्य कापि न ][28]तथा मुक्तस्य मुक्तक्रिया[29]।
मिथ्यारोपकृतो ऽथ रज्जुभुजगच्छायापिशाचभ्रमो
मा किंचित् त्यज मा गृहाण विलस स्वस्थो[30] यथावस्थितः॥०॥२१॥

[ एकविंशं चर्यागीत्यां टीका॥ ]

25. H. ताब सेo। 26. Tib. rendering is not literal and does not help to correct the readings of Ms. preserved in H. 27. H. चात्रैव। 28. याति काचिद(त)। 29. H. oक्रियः। 30. H. स्वैरमो।

॥२२॥

[ राग गुञ्जरी सरहपादानाम् । ]

अपणे रचि रचि भवनिर्वाणा ।
मिछे[1] लोअ बन्धावए अपणा ॥ [१] ॥

अम्हे[2] ण जाणहु अचिन्त जोइ ।
जाम मरण भव कइसन होइ ॥ ध्रुवपद ॥

जइसो जाम मरण वि तइसो ।
जीवन्ते मइलेँ[3] नाहि विशेसो ॥२॥

[4]जा एथु[4] जाम मरणे
सो करउ रस रसानेरे कङ्खा[5] ॥[6] ३॥

जे सचराचर तिअस[7] भमन्ति ।[8]
ते अजरामर किम्पि न होन्ति ॥[8] ४ ॥

जामे काम कि कामे जाम ।
सरह भणति अचिन्त [9]सो धाम[9] ॥५॥

1. मिछेँ = मिथ्यैव ; log ltas 'मिथ्या दृष्ट्या' । 2. H. अम्मे ; bdag gis 'आत्मना, मया' । 3. H. मअलेँ । 4..4. H. जाएथु to be read as जा एथु =यः अत्र ; Cf. Tib. gaṅ 'dir. 5. H. करबा । 6. de byed gser 'gyur bcud len sgrub bar byed 'he may practice the alchemy of changing into gold' is not literal. 7. तिअस ∠ त्रिदश 'having three states viz. ; बाल्य 'childhood', कौमार 'tender age' and यौवन 'youth' i. e. a god. 8. de rnams 'ga daṅ bar cis mi 'gyur 'ते जराग्रस्ता, केन न भवन्ति' is just contrary to ते अजरामर किंपि न होन्ति 'ते

आत्मना रचयित्वा रचयित्वा भवनिर्वाणे।
मिथ्या लोको बध्नाति आत्मानं ॥१॥

वयं न जानामो ऽचिन्त्ययोगिनः।
जन्ममरणभवः कीदृशो भवति ॥

यादृशं जन्म मरणमपि तादृशं।
जीवति मृते नास्ति विशेषः ॥२॥

यो ऽत्र जन्मनि मरणे विशङ्कः।
स करोतु रसरसायनयोः कांक्षां ॥३॥

ये सचराचरत्रिदशे भ्रमन्ति।
ते ऽजरामराः किमपि न भवन्ति ॥४॥

जन्मना कर्म किं कर्मणा जन्म।
सरहो वदति अचिन्त्यं तद्धाम स धर्मो वा ॥५॥

[१] तमेवार्थं सर्वधर्माधिगमेन सरहपादः प्रतिपादयति। अपणेत्यादि। अनाद्यविद्या-वासनादोषेण भवनिर्वाणकल्पारोपणं चरित्वा लोको ऽयं भ्रान्त्या स्वयमेव भवबन्धनबद्धो भवतीति ॥

[ध्रु] ध्रुवपदेन स्वज्ञानं द्रढयन्ति। अम्हे इत्यादि। सिद्धाचार्यसरहपादा एवं वदन्ति। गुरुचरणरेणुप्रसादात् भावस्वरूपपरिज्ञानेन अचिन्त्या योगिनो वयं। अतएव उत्पादादि-भंगं कीदृशं भवतीति न जानामः। तथा एकश्लोका भगवती—

उत्पादस्थितिभंगदोषरहिताम् इत्यादि ॥

अजरामराः कथमपि न भवन्ति'। ९...९. सो धाम has two meanings, viz. तत् धाम 'that abode and स धर्मः 'that religion'; the latter sense has been rendered in Tib. as—de chos.

[२] द्वितीयपदेन उत्पादस्वरूपमाहुः । जइसो इत्यादि । सर्वस्य[10] नैरात्म्यावगमेन कस्योत्पादो विद्यते । भो योगीन्द्राः [ इति ] स्वयमेवात्मानं संबोध्य वदन्ति । यस्योत्पादो नास्ति तस्य भंगोऽपि न दृश्यते । तथा च अद्वयसिद्धौ—

यस्य स्वभावो नोत्पत्तिर्विनाशो नैव दृश्यते ।
तज्ज्ञानमद्वयं नाम सर्वं संकल्पवर्जितम् ॥

अतएव जीवतः पुरुषस्य मृतेन सह[11] भेदोपलंभो नास्तीति । तथा च सूतके

सुप्तप्रबुद्धे तु न चान्यभेदः ।
'कल्पयेत् स्वप्नफलाभिलाषी ॥

[३] तृतीयपदेन स्वयमेवानुशंसामाहुः । यस्मिन् मरणादिभयं वा विद्यते सोऽपि[12] योगी रसायने विविधादिकल्पप्रयोगं करोति [ ? करोतु ] । वयं पुनः मरणादिभये निःशंक-निर्विकल्परूपाः ॥

[४] चतुर्थपदेन पुनरस्यानुशंसामाहुः । ये इत्यादि । ये ये बाल्ययोगिनः जंबूद्वीप-महास्थाने सचराचरे भ्रमन्ति अथवा मन्त्रौषध्यादिशक्त्या त्रिदशं देवालयं गच्छन्ति ते ऽपि गुरुमार्गालब्धत्वादमरत्वं न प्राप्नुवन्ति ॥

[५] पञ्चमपदेन वर्त्ममाहात्म्यमाहुः । जामेत्यादि । कर्तृकर्मविहीनस्य योगीन्द्रस्य जन्मना कर्म किं भवति कर्मणा वा उत्पादश्च । अतएव सरहपादाः स्वाभिप्रायं वदन्ति । परमार्थविद् योगिनो ऽचिन्त्या हि ॥०॥२२॥

[ द्वाविंशर्यां चर्यागीत्यां टीका ॥ ]

10. H. सर्वस्य । 11..11. H. जीव(वि)ता पुरुषेण सम्भवाहवेन सह ; skyes bu gson po daṅ śi ba dag la 'जीविते च मृते च पुरुष' । 12. सोऽपि stands for स एव ।

॥२३॥

[ राग बड़ारी भुसुकुपादानाम् ][8]

जइ तुम्हे भुसुकु अहेरि[1] जाइबें मारिहसि पञ्चजणा
नलिणीवन[2] पइसन्ते होहिसि एकुमणा ॥ [१] ॥

[3]जीवन्ते भेला विहणि[3] [4]मएल रअणिहि[4] ।
[ग]हणविणु माँसे भुसुकु पद्मवन पइसहिलि[5] ॥ ध्रुवपद ॥

माआजाल [6]पसरिउ रे[6] बाँधेलि माआहरिणी ।
सद्गुरुबोहेँ बुझिरे कासु कहिनि ॥[7] [२] ध्रु ॥

1. H. अहेइ ; rṅon 'to hunt'. 2. H. नलणीवन ; pad ma'i tshal. 3...3. gson po gsod par ma byed 'जीवन्तं मा जहि'। 4..4. śi ba'i ro ni ma blaṅ cig 'मृतस्य शवं मा गृहाण' H. णअणि। 5. śa ni med par bhu su ku pa khyim du 'jug ma byed 'मांसेन विना भुसुकुपाद गृहं मा प्रविश'। 6...6. H पसरि ऊरे। 7. gtam 'कथा' H. कहिनि। 8. Only these first six lines of the Caryā has been preserved in original. The last four lines and the Sanskrit commentary which are entirely lost, are given below in Sanskrit translation from the Tibetan version ( see Appendix I at the end of the text where Tib. version is given in Roman script ).

यदा त्वं भुसुको आखेटकं गमिष्यसि मारयिष्यसि पंचजनान् ।
नलिनीवनं प्रविशन् भविष्यसि एकमनाः ॥१॥

जीवति जातः अमातो मृते रजनिः ।
ग्रहणं विना मांसस्य भुसुकुः पद्मवनं प्रविष्टः ॥०॥

मायाजालं प्रसार्य अरे बद्धा माया हरिणी ।
सद्गुरुबोधेन बुद्धा [कस्मिन्] कस्य कथा ॥२॥

[ काय आत्मपात्रं माता पृथिवी जलम् अग्निश्च भोजनम् ।
कालाकालोभयम् आलंब्य पवनमार्गे योगप्रमाणास्त्रेण चालय ॥३॥

जालशृंखलारज्जूनामभावे हरिणो द्रुतं पलायितः ।
उत्प्लुत्योत्प्लुत्य द्रवन् गगनमध्ये ऽस्तमितः भुसुकुपादरजनी प्रभाता भवति ॥४॥

तमेवार्थं सहजानन्दप्रेरितहृदयः सिद्धाचार्यो भुसुकुपादो हरिणसंध्या[भाषया] विभावयति । जइ तुम्हे इत्यादि । हे भुसुकु ! त्वं यदि । कायपवनो हरिणकायपवनस्वभावः अहेरि—इति निःस्वभावकरणस्य उपायविधीन् [ उद्दिश्य ] चारिकाकृत्यं । तदा पंचसु विषयेषु स्कन्धे भूतेषु, पृथिवीधातुचक्षुरिन्द्रियादिषु पंचजनसमूहक्रमेण घातो हि निःस्वभाव-कृत्यादिः करणीयः । पश्चाद् वज्रजापेन हूँ तदृष्टिं निरुध्य सम्यक्कुलिशाब्जसंयोगं गुरुप्रसादात् महासुखकमलनलिनीवनं प्रविशति । होहिसि एकुमणा इति विकल्पविरहः । [ इति ] आत्मनात्मानं संबोधयति ॥

ध्रु । तदर्थं ध्रुवपदेन दृढयितुमालंबनशुद्धिमाह । जीवन्ते इत्यादि । प्रविशति श्वासे जीव 'औं' इत्यक्षरं दिवाज्ञानं चत्वारिंशत्स्वभावयुक्तं । निर्गते श्वासे मृतः शवो 'हूं' इत्यक्षरं रात्रिज्ञानं त्रयस्त्रिंशत्स्वभावयुक्तं । तिष्ठतः श्वासस्य मूलम् 'आ' इत्यक्षरं सप्तस्वभावयुक्तं । तथा वज्रपाणिर् अपि—

ओङ्कारेणाविशत्सत्त्वा सुखकामवरेप्सितः ।
हूंकारेणोत्सृजत्सत्त्वा आकाराक्षरमास्थिताः ॥

तथा दर्शनं रात्रिभागेनेत्याद्यतिरेक उक्तः। मुख्यप्राणादिज्ञानं मध्यमायां प्रवेश्य तत्पश्चात् मांसमिति संध्याभाषया विरमानन्दं स्वाधिष्ठानस्वभावं चतुर्थानन्देन न त्यक्त्वा हे भुसुकपाद महासुखगृहं न प्रवेष्टव्यं। तथा पंचक्रमे ऽपि—

नास्ति रात्रौ न संध्यायां दिवापि च न विद्यते।

इत्याद्याह। तथैव च सरहपादैर् अपि—

अस्तं यातीन्द्रियं यत्र स्वभावे न च तिष्ठति।

भो तं सहजमानन्दं गुरुचरणेषु पृच्छ॥

२। द्वितीयपदेन मार्गोपायमाह। माआजाल इत्यादि। मायेति कर्माङ्गं कल्पयितव्यं। विचित्रादिक्षणलब्धमानन्दसंदोहकायं जालत्वेनारोप्य। तेन कायस्य हरिणं बद्ध्वा गुरुचरण-प्रसादात् तस्य स्वभावमध्ये प्रवेशः कर्तव्यः। तदर्थं तत्र आनन्दसंवेदनस्वभावाधिगमस्तदा कश्चिदपि न निर्वक्तुं शक्यं। तथा च सरहपादैर् अपि—

आनन्देन प्रीताः लोकाः।

इत्यादि प्रोक्तं॥

३। तृतीयपदेन भावनाविशेषमाह। कायः [आत्म-] पात्रमित्यादि। कायो हि आत्मनः पात्रं चतुष्टयं भवति। ततो जातानि पंचमहाभूतानि भोक्तव्यवस्तूनि। तत्र कालाकालौ तु चन्द्रसूर्यौ तृतीयामवधूत्यां वायोः चतुर्थानन्देन सर्वविघाताय। खानपानं निःस्वभावं करणीयं। तथा च श्रीकालचक्रे ऽपि

यत् शुक्रबिन्दुधारणपतने दिवारात्रि इत्याद्याहुः॥

४। चतुर्थपदेन फलसंपत्तिमाह। जालश्रृंखलेत्यादि। तत्र महासुखं परमानन्द-जालं संध्याभाषया कायानन्दो विकल्पयितव्यं। श्रृंखलेति संध्याभाषया वागानन्दो विकल्पयितव्यः। रज्जुरिति चित्तानन्दो विकल्पयितव्यः। तत्सर्वं रूपादिकमपि शून्यं। द्रुतमिति। प्रभास्वरपतनं। तदेव वायुस्वभावः कायहरिणः। पलायित इति। निःस्वभावभूतः सर्वदाभ्यस्तयोगी गगनप्रभास्वरे विलीयते। तदर्थं भुसुकपादैः रजनीति अविद्यान्धकारः दूरित इति पलायित इत्यस्यार्थः। तथा च आगमाद् अपि

आत्मा तथैव लीनो भगवान् जीविताधिपः॥

इत्यादिवचनम्॥०॥२३॥]

[त्रयोविंशत्यां चर्यागीत्यां टीका॥]

॥२४॥[1]

[ राग इन्द्रताल[2] कृष्णाचार्यपादानाम् ।

पूर्णचन्द्र उदयति यदा ।
चित्तराजो विमलो भवति तदा ॥१॥

मोहमलं छिन्नं गुरूपदेशेन ।
विषयेन्द्रियं गगनमुपेतं ॥ ध्रु ॥

खसमबीजं यत् खसमं याति ।
आत्मवृक्षस् त्रिधातुषु वितनोति च्छायां ॥२॥

यथा उदिते सूर्ये रात्रिर्व्यपयाति ।
(तथा) भवसमुद्रमोहरजो दूरीभवति ॥३॥

राजहंसो यथा जलं विभिनक्ति ।
भवं भुङ्क्ष्व [ तथा ] इति कथयति कृष्णपादः ॥४॥

1. This *gīti* with its Sanskrit commentary lost due to a lacuna in the Ms. is given below in Sanskrit retranslation from Tib. version appended in Roman Transliteration at the end of the work. The first two lines are found in original for they are quoted in *Sekoddeśa-ṭīkā* ( G. O. S. P. 48 )

पुण्णिम चन्दा उइअउ जव्वेँ ।
चिअराअ निमिलिअ [ ? निमलअ ] तव्वें ॥

2. The name of the *rāga* is given as dba' bor' ta la [ ? dbaṅ poi ta la=इन्द्रताल ] ।

१। तमेवार्थं महासुखराजः सर्वधर्मालम्बनरसः स कृष्णाचार्यः पुनरपि विभावयति। पूर्णचन्द्र इत्यादि। गुरुप्रसादात् यदा षोडशकलं बोधिचित्तचन्द्रमण्डलमुदेति तदा योगीश्वरस्य चित्तराजो ऽत्यन्तं विमलो भवति ॥

ध्रु। ध्रुवपदेन तमेवार्थं द्रढयति। छिन्नमित्यादि। मतिमतो गुरूपदेशेन मोहादिकमावरणं परायते। विषयेन्द्रियादिकं गगनं प्रभास्वरं प्रविशति। तथा च **सरहपादाः** अप्याहुः—

युगपदुदिताय नम इत्यादि ॥

२। द्वितीयपदेन धर्मबीजानुभावमाह। खसमबीजमित्यादि। गगनतुल्यं बीजं प्रभास्वरस्वभावं चित्तजं। तस्य स्वाभाविकप्रकाशः प्रभास्वर आत्मवृक्षच्छाया योगीश्वरज्ञानरश्मिस् त्रिधातून् व्याप्नोति ॥

३। तृतीयपदेन तस्य विशेषलक्षणमाह। रात्रिर्व्यपगता—इत्यादि। यथा सूर्ये उदिते रात्रेरन्धकारो व्यपगच्छति तथा सद्गुरुचरणरजोराशिं प्रणम्य जातप्रविवेक[3] दर्शनस्वभावेन प्रसादेन भवसमुद्रे ज्ञानस्य रागद्वेषादिकमावरणं दूरं पलायत इत्युपदेशः ॥

४। चतुर्थपदेन योगीश्वरस्य चर्यामाह। राजहंस इत्यादि। यथा बही राजहंसो नीरक्षीरयोर्मिश्रं नीरं विविच्य क्षीरं पिबति। कृष्णाचार्यो योगिवरो भवस्वभावान्तः प्रविश्य [ आह ] भवं भुङ्क्ष्व भवोपादानं मा कार्षीः। तथोक्तं **बोधिपादैर्** अपि—

न भवोऽस्ति न निर्वाणं यथाभूतविचारतः। इति ॥०॥२४॥

चतुर्विंश्यां चर्यागीत्यां टीका ॥ ]

3. Lit. पृथक् पृथक्।

॥२५॥[1]

[ गीतिस् तन्त्रीपादानाम् ।

धर्मोदयः पादाधिष्ठानं वज्रपदं नादः ।
पंचक्रमं वयित्वा तंत्रिणः पटो विमलः ॥१॥

अहमेव तंत्री स्वयमेव तानं ।
वितानं[च] स्वयमज्ञातलक्षणं ॥ ध्रु ॥

सार्धत्रिहस्तं गृहे वेममुक्तं त्रिवृतं ।
गगनं पूर्णं स हि तन्त्रवयनं ॥२॥

अनाहतो वेमवरशब्दो हि गुरूपदेशेनाविरहितं ।
द्वे स्थिती छित्वा सूत्राणि व्यावृत्य दृढं प्रसारितानि ॥३॥

मणि गतः शून्यतया लक्षणशून्यतासारं ।
वयन[जाल] रसस्तंत्रो मोहजालमुक्तः ॥४॥

1. The *Caryā* and the Sanskrit commentary ( save the last two verses ) are lost which are put here in Sanskrit retranslation from Tib. version appended at the end of this work.

१। सर्वधर्मनिपुणस्तमेव सत्त्वानामर्थाय तन्त्रीपादा आहुः। धर्म इत्यादि। धर्मोदयः सन्ध्याभाषया प्रज्ञाधर्मोदयः। पादाधिष्ठानमिति चतुर्णां पादानां चतुर्णामानन्दानामाश्रयः। तथा च द्विकल्पे—

अवर्णौ यत् करोति चतुर्देवीत्यादि।

पुनरपि सदर्थवेदनेन सम्यग्यथाभूतभावस्य धर्मस्य उदयस्थानं यद्भवति स एव धर्मोदय इति। वज्रमिति योगीश्वरस्य कार्यकारकभावात् तस्य स्थानस्य तद् वचनं योगः। तथा च सरहपादाः— वज्रपतनाद् भावना। पद्ममेव वज्रम्। कार्यकारणाभ्यां मुद्रांकनं। अयमेव महासुखराज इति। तत्र प्रज्ञाकमले आदर्शतुल्यादिकं ज्ञानपंचकं संवृत्यात्मकं बोधिचित्तं शून्यताकरुणास्वभावं [भवति] गुरुप्रसादात्। विमलवस्त्रमिति स्वयं प्रभास्वरेण परिशोधनमिति। तथा च द्विकल्पे—

संवृतिः सर्वसमा सदर्थसुखरूपमिति॥

ध्रु। ध्रुवपदेन सम्यगवबोधं दृढयति। अहमेव तन्त्रीत्यादि। वस्तुत उपायात्मकस्तंत्रीपादः। तानवितानमिति। यस्मात् संवृतिसदर्थभेदालंबनेन लक्षणं न ज्ञातमिति। तथा च—

ग्राह्यग्राहकाभावेन यत्र चित्तं न जायते।
चित्तं न जायते यत्र तदेव परमं पदं॥

२। द्वितीयपदेनाश्रयाश्रयिणावाह। सार्धत्रिहस्तमित्यादि। निजकायः समापत्तिगृहे विमुक्तः। तत्र तृतीयानन्दो जातः। गगनं पूर्णमिति परिशुद्धप्रभास्वरेण परितो योगेन पृथक्पृथग्दर्शनवदात्मस्थितिः। तथा च द्विकल्पे—

कायेन रहितं चित्तमन्यत्र द्रष्टव्यं नास्ति॥

[३] [तृतीयपदेन प्र]तीतिसामग्रीमाह। अनहा इत्यादि। वेमकटरणेति [?][2] संध्यया प्राणापानं प्रज्ञोपायात्मकं वातद्वयं अनाहतं परिकल्प्याप्रतिमानकमिति। सहजप्रतिच्छन्दकं तदेव संवृतिबोधिचित्तं सद्गुरुवाक्य[ा]विहीनेन[3]। वेणतीति[?][4] तस्य भावाभावग्रहं तोडयित्वा कमलकुलिशसंयोग दृढमभेद्यं कृतमस्माभिरिति॥

---

2. thags bzaṅs 'good loom, वेमवर'।

3. bla ma dam pa'i gsuṅs gis bsgrub par bya 'सद्गुरूपदेशसिद्ध'।

4. gnas gñis 'द्वे स्थिती'; correct as वेणीति।

[४] चतुर्थपदेन योगिन्यनुशंसामाह । मठामनीत्यादि[?][5] । सर्वधर्मप्रकृति-प्रभास्वरावगमात् युवतिजनप्रसंगे सैव प्रकृतिपरिशुद्धावधूतिका नैरात्मयोगिनी बइठामनीति[?][6] नित्यरूपा मया तन्त्रीपादेन प्राप्ता । अतएव तत्प्रसादात् मोहाभिष्वंग सूत्रबन्धैर्वियुक्तः सन् । तंत्रीति जातिधर्मान् विहाय व्रजधरो भूतोऽहमस्मि—इति । तथा च सरहपादाः—

स श्रीमान् इत्यादि ॥०॥२५॥

[ पंचविंश्यां चर्यागीत्यां टीका । ]

5. nor bus son pa 'मणिना संगमः' ।
6. nor bur gnas 'मणौ स्थानं' ।

॥२६॥

[ राग शाबरी[1] शान्तिपादानाम् । ]

तुला धुणि धुणि आँसुरे आँसु ।[2]
आँसु धुणि धुणि णिरवर[3] सेसु ॥ [१] ॥

तउ से हेरुअ[4] ण पाविअइ ।
सान्ति भणइ[5] किण स भाविअइ[5] ॥ ध्रुवपद ॥

तूला धुणि धुणि[6] सुणे अहारिउ[6] ।
पुण लइआ अपणा चटारिउ[7] ॥ [२] ध्रु ॥

[8]बहल बढ[8] दुइ मार[3] न दिशअ ।
शान्ति भणइ बालाग न पइसअ ॥ [३] ध्रु ॥

काज न कारण ज एहु जुगति ।
सअसँवेअण बोलथि सान्ति ॥ [४] ध्रु ॥

---

1. H. शीबरी ; Tib. transcription शा-ब-री । 2. The line means—"Having carded the cotton again and again into threads." तुला has two meanings—(1) तुला 'measure ; (2) तूलं 'cotton'. The former has been rendered in Tib. as 'tshad mas'. धुनि from root धू 'shake' also has two senses here (1) ऊर्णतूलादिप्रशोधन 'to card cotton etc.' (2) विचय 'to analyse, examine ( figuratively ) ; The Tib. Translator missed former meaning and recorded only the latter which is secondary one. The commentary also does the same thing in both the places. 3. णिरवर < निरपरं having no other, has been rendered in Tib. as thag ma med 'अनवशेष' 'having no remnant' and explained in the commentary as निरवयव 'having

तूलं धूत्वा धूत्वा अंशु[तो] अरे अंशुः ।
अंशु धूत्वा धूत्वा निरवयवः शेषः ॥१॥

तथापि स हेरुको हेतुरूपो वा न प्राप्यते ।
शान्ति र्वदति किं स भाव्यते ॥०॥

तूलं धूत्वा धूत्वा शून्ये आहृतं ।
पुनस् [तं] गृहीत्वा आत्मा अवलीढः ॥२॥

बहलं वृद्धं ( =अतिघनं ) [ तत्र ] द्वौ मार्गौ न दृश्येते ।
शान्तिर्वदति [ तत्र ] बालाग्रं न प्रविशति ॥३॥

कार्यं न कारणं या [एषा] अत्र युक्तिः ।
स्वयंसंवेदनं वदति शान्तिः ॥४॥

[१] ज्ञानानन्दप्रमोदभरस्तिमितहृदयः सिद्धाचार्यो हि शान्तिस्तमेवार्थं जनार्थाय प्रतिपादयति । तुलेत्यादि । प्रकृतिदाषत्वात् तुलनयोग्यत्रैलोक्यं कायवाक्चित्तं । अस्य कम्पाकम्पादिभेदेनावयविनमेकप्रमोणोपपन्नं कृत्वा मयावयवस्य षडंशसाधनः कृतः । स एवावयव-परमाणुपुञ्जस्य परमाणोः षडङ्गताभावेन धूत्वा धूत्वा निवरमिति निरवयवं सूचितं ॥

no part'. 4. हेरुअ ∠ हेरुक has been understood by the Tib. translator as phyir na gzugs =हेतुरूप। The commentator also thinks in the same line and explains the entire *pāda* as तथा..... हेत्वन्तरं न प्राप्यते। 5...5. H. किण समावि अइ; ci shig sgom par byed 'किं भाव्यते'। 6...6. stoṅ pa ñid du sod 'reached to *Sūnyatā* 'vacuty'. 7. 'god par byed 'took away'; चटारिउ to be derived from *Deśi* root चट्ट् 'lick' has been used in the sense of finishing a thing by licking it. Cf. कोससअचट्टिणि *in Karpūramañjarī, after śloka 19 in Act one.* 8..8. बहल वढ ∠ बहलं वृद्धं = अतिसान्द्र 'very much compact'. 9. मार ∠ मार्ग; cf. Tib. lam.

[१] तथा च अहेतुकत्वात् तस्य चित्तस्य हेत्वन्तरं न प्राप्यते। शान्तिपादो वदति भावोपलंभाभावेन किं भाव्यते। तथा च प्रज्ञापरिच्छेदे—

विचारित इत्यादि ॥

[२] द्वितीयपदेन तदेवार्थं दृढयति। तुल[ा]धुनोत्यादि। तद्विचारप्रमाणतोऽप्यवयवादिकं दत्वा। शून्येति प्रभास्वरे चित्तं प्रवेशितं मया। तं प्रभास्वरं गृहीत्वा चटारिउ[10] इति आत्मग्रहभाव्यभावकरूपं बाधितमिति। तथा च द्विकल्पे—

नास्ति भावको न भाव्यो ऽस्तीत्यादि ॥

[३] तृतीयपदेन मार्गस्यानुशंसामाह। बहलेत्यादि। अद्वयत्वादस्मिन् मार्गवरे द्वयाकारं न विद्यते। अतएव शान्तिपादो हि वदति। बालो हि अज्ञो हि अस्मिन् धर्मे न प्रविशति सुदूर एव। अथवा बालवत् रेखासन्धिमात्रमत्र न विद्यते। तथा च नागार्जुनपादाः—

सौशोर्यन्ते कारे इत्यादि ॥

[४] चतुर्थपदेन स्वरूपोपलम्भमाह। काजेत्यादि। सिद्धाचार्यो हि शान्तिः स्वयं कार्यकारणरहितत्वात्। अनुत्तरपदं वदति। एषा हि युक्तिः। प्रमाणोपपन्ना सद्गुरुप्रसादादनुत्तरपदं स्वयं ज्ञायते। तथा च द्विकल्पे—

आत्मना ज्ञायते पुण्याद् गुरुपर्वोपसेवया ॥०॥२६॥

[ षड्विंश्यां चर्यागीत्यां टीका ॥ ]

10. H. चटरिव।

॥२७॥

[ राग कामोद[1] भुसुकुपादानाम्[2] । ]

अधराति भर कमल विकसिउ ।
बतिस जोइनी तसु अङ्ग उहलसिउ ॥ [१] ॥[3]

चालिअउ[4] ससहर[5] मागे अवधूइ ।
रअण[पभाव][6] हु सहजे कहेइ ॥ ध्रुवपद ॥

चालिअउ ससहर गउ[7] णिवाणे ।
कमलिनि कमल वहइ पणालेँ[8] ॥ [२] ध्रु ॥

विरमानन्द[9] विलक्षण सुध[10] ।
जो एथु बुझइ सो एथु बुध ॥ [३] ध्रु ॥

भुसुकु भणइ मइ बुझिअ मेले ।
सहजानन्द महासुख लीलेँ[11] ॥ [४] ध्रु ॥

1. bdo dpa sbyin pa 'कामद' । 2. gsum pa'i shabs [?]. 3. nam phed chu skyes khaṅs rgyas sum cll gñis । rnal 'byor ya rnams de la yan lag chen ॥ अर्धरात्र्यां कमलमुल्लसितं विकसितं । द्वात्रिंशद् योगिन्यः तस्य महद् अङ्गं ॥ [?] 4. H. चालिउअ is a वर्णविपर्यास for चालिअउ (∠ चाल्यतु); bskyod 'pass on'. 5. H. षषहर । 6. Commentary सद्गुरुवचनतत्त्वरत्न-प्रभावात्; rin chen chig [?]. 7. 'das bar 'अतीत, अतिक्रान्त' । 8. पणाल ∠ प्रणाल 'a hollow stalk of the lotus; a canal'. 9. khyad par dga ba 'विशेषानन्द' । 10. not translated in Tib. 11. H. लोलेँ; rol 'लीला' ।

अर्धरात्र्यां सकलायां कमलं विकसितं।
द्वात्रिंशद्योगिन्यस्तस्यांगानि उल्लसितानि ॥१॥

प्रस्थितः शशधरो मार्गेण अवधूत्याः।
रत्न[प्रभावे]ण सहजं कथयति ॥०॥

प्रस्थितः शशधरो गतो निर्वाणं।
कमलिनी कमलं वहति प्रणालेन ॥२॥

विरमानन्दो विलक्षणः शुद्धः।
यो ऽत्र बुध्यति सो ऽत्र बुद्धः ॥३॥

भुसुकु र्वदति मया बुद्धो मेलने।
सहजानन्दो महासुख लीलया ॥४॥

[१] तमेवार्थं सहजानन्दरसपूर्णो हि भुसुकुसिद्धाचार्यः प्रतिपादयति। अधरातीत्यादि। तत्र सेकपटलोक्तविधानात् अर्धरात्रौ चतुर्थीसंध्यायां प्रज्ञाज्ञानाभिषेकदानसमये वज्रसूर्यरश्मिना कमलं विकसितं मम। तस्मिन् समये द्वात्रिंशद् योगिनीति द्वात्रिंशन्नाड्का बोधिचित्तवहा ललना रसना अवधूती अभेद्याः सूक्ष्मरूपादिका बोद्धव्याः। [ताः] तत्र स्थाने स्रवन्ति। तासां आनन्दादिसंदोहेन अंगोल्लासो[12]ऽभूत् ॥

[ध्रु] ध्रुवपदेन सद्गुरुप्रभावमाह। तस्मिन् काले तेन हेतुना ससहर बोधिचित्तचन्द्रः अवधूतीमार्गेण वज्रशिखरं गतः। सद्गुरुवचनतत्त्वरत्नप्रभावात् स सहजानन्दं कथयति। तथा च सरहपादाः—

चित्ते शशहरम् इत्यादि ॥

[२] द्वितीयपदेन तमेवार्थं वदति। चालिअ इत्यादि। शशहरो हि बोधिचित्तं, अवधूतीमार्गेण यत् प्रचलितं; स एव गुरुसंप्रदायात् वज्रशिखराग्रे निर्वाणं प्रभास्वरं गतं। कमलरसं

12. H. अङ्गोल्लासो।

महासुखरसं अस्यास्तीति कमलिनी। सैव प्रकृतिपरिशुद्धावधूतिका नैरात्मा कमलरसं तमेव बोधिचित्तमहासुखरसेन कायवज्रं प्रीणयित्वा महासुखचक्रोद्देशं वहति। तथा च कृष्णाचार्यपादाः—

पह वहन्ते णिअमण बंधण इत्यादि ॥[13]

[३] तृतीयपदेन तमेवार्थं कथयति। विरमानन्देत्यादि। विलक्षणचतुर्थानन्दशुद्धो ऽयं विरमानन्दः। यस्य योगीन्द्रस्य अवगमो गुरुप्रसादाद् अहर्निशमभूत् स एव भगवान् वज्रधरः द्वात्रिंशल्लक्षणयुक्तो व्यंजनाशीत्यलंकृतः। अनधिगततत्त्वानामत्रावकाशो न स्यादिति। तथा च दवडीपादाः—

गवां यूथन्याय इत्यादि ॥

[४] चतुर्थपदेन स्वबोधं द्रढयति। भुसुकु भणइ इत्यादि। भुसुकुपादो हि वदति। मया भुसुकुपादेन प्रज्ञोपायमेलके सहजानन्दं महासुखं सद्गुरुप्रसादाल्लीलयावगतं ॥०॥२७॥

[ सप्तविंशत्यां चर्यागीत्यां टीका ॥ ]

13. *Kāṇhapāda : Dohākoṣa* verse 17 ; H. पह वहन्ते णिअमर बंधन।

॥२८॥

[ राग बलाड्डि[1] शबरपादानाम् । ]

उँचा उँचा पावत तहि वसइ सवरी बाली ।
मोरङ्गि पीच्छ परहिण सवरी गिवत गुञ्जरी माली ॥ [१] ॥

उमत सवरो पागल सवरो मा कर गुली[3] गुहाडा [4]तोहोरि ।
णिअ घरिणी नामे सहज सुन्दरी ॥ ध्रुवपद ॥

नाना तरुवर मौलिल[5] रे गअणत लागेली डाली[6] ।
एकेली सवरी ए वण हिण्डइ कर्णकुण्डलवज्रधारी ॥ ध्रु [२] ॥

तिअ धाउ खाट पड़िला सवरो महासुखे सेजि छाइली ।
सवरो भुजङ्ग नैरामणि दारी पेम्ह राति पोहाइली ॥ ध्रु [३] ॥

हिअ ताँबोला महासुहे कापुर खाइ ।
सुन नैरामणि कण्ठे लइआ महासुहे राति पोहाइ ॥ ध्रु [४] ॥

गुरुवाक् पुञ्छिआ[7] बिन्ध निअमण बाणे ।
एके शरसन्धाने बिन्धह बिन्धह परमणिवाणे ॥ ध्रु [५] ॥

उमत सवरो गरुआ रोषे ।
गिरिवर सिहर सन्धि पइसन्ते सवरो लोड़िब[8] कइसे ॥ ध्रु [६] ॥

---

1. Tib. transliterates ब-रा-टि; both बलाड्डि and ब-रा-टि stand for बराडि which is the correct name of the *raga*. 2. Tib. gives the name स-र-ह through some confusion here though in the body of

उच्चः उच्चः पर्वतः तस्मिन् वसति शबरी बालिका ।
मयूरांगी पिच्छपरिहिता शबरी ग्रीवायां गुंजिकामालिका ॥१॥

उन्मत्तः शबरः मत्तः शबरः मा कुरु साध्यभियोगं तव—
णिजा गृहीणी नाम्ना सहजसुन्दरी ॥०॥

नाना तरुवराः मुकुलिताः अरे गगने लग्नाः शाखाः ।
एकाकिनी शबरी अत्र वने हिंडते कर्णकुंडल वज्रधारिणी ॥२॥

त्रिधातुखट्वां न्यपातयत् शबरो महासुखेन शय्यामस्तृणात् ।
शबरो भुजङ्गः नैरात्मा दारिका प्रेम्णा रात्रिः प्रभाता ॥३॥

चित्ततांम्बूलं महासुखेन कर्पूरं खादति ।
शून्यां नैरात्मानं कण्ठे कृत्वा महासुखेन रात्रिः प्रभाता ( भवति ) ॥४॥

गुरुवाक् पुंखेन निजमनोबाणेन ।
एकेन शरसन्धानेन विध्य विध्य परमनिर्वाणं ॥५॥

उन्मतः शबरो गुरुणा रोषेण ।
गिरिवरशिखरसन्धिं प्रविशन् शबरो ऽन्वेषयितव्यः कथम् ॥६॥

the text and commentary it reads श-ब-र । 3. Cf. *deśi*-word गोल for साक्षिन् । 4. Cf. *Avadhī* गोहारी a rescuer or a call for rescue : रामकृपां अवरेब सुधारी । बिबुध धारि भइ गुनद गोहारी ॥ *Ramacarita mānasa of Tulasidāsa*. 5. rtsi mo 'मौलि, top' is a wrong rendering for मौलिल < मुकुलित । 6. डाली is to be derived from दारु with the sementic change. Cf. Bengali and Hindi डाल ; Avadhi डार ।

[१] शबरपादो हि सिद्धाचार्यस्तमेवार्थं महाकरुणारसविद्धो लोकार्थाय प्रतिपादयति। उँचेत्यादि। योगीन्द्रस्य स्वकायकंकालदंडमुन्नतं सुमेरुशिखराग्रे महासुखचक्रे। सकारपरो हकारः स एव पविधरः। तस्य गृहिणी ज्ञानमुद्रा नैरात्मा अँकारजा वसति। मयूरांगमिति। नानाविचित्रपक्षविकल्परूपं स्वरूपेणाधिवास्यतया परिधानमलंकारं कृतं। गुंजेति ग्रीवायां संभोगचक्रे गुह्यमंत्रमाधिक्ये ऽपि[9] विधृता॥

[ध्रु] पदस्योत्तरपदेन ध्रुवपदं बोद्धव्यम्। उमत इत्यादि। भगवती नैरात्मा भावकायाश्वासं ददाति। भो उन्मत्त विषयविह्वलचित्त शबर प्रज्ञोपायमेलके गुलीति आनंदादिविकल्पं मा कुरु। अहं तव गृहिणी ज्ञानमुद्रा सहजसुन्दरीति॥

[२] [10]द्वितीयपदेनाभ्यासस्वरूपमाह[10]। नानेत्यादि। अस्य कायसुमेरोः। तरुवरं अविद्यारूपं। आनन्दादिमन्त्रेण नानाप्रकारेण मुकुलितनिजरूपं गतं। अस्य डालं च पंचस्कन्धं गगने प्रभास्वरे लग्नं। अतएव सा नैरात्मा एकका। कर्णेति नानास्थाने कुण्डलादि पंचमुद्रानिरंशुकालंकारं कृत्वा वज्रमुपायज्ञानं विधृत्य युगनद्धरूपेण अत्र कायपर्वतवने। हिण्डति क्रीडति॥

[३] तृतीयपदेन क्रीडासुखप्रवाहमाह। तिअ धाइत्यादि। त्रैधातुकं कायवाक्चित्तं सुखप्रभास्वरे तं टालयित्वा तेन महासुखेन शय्यां कृत्वा शबरचित्तवज्रभुजङ्गेन सह। दारिकेति। क्लेशान् दारयतीति दारिका नैरात्मा। दारिकायाः प्रेममिति क्रीडारसमनुपमं वर्धयित्वा। रजनी अन्धकारं प्रज्ञोपायविकल्पं नाशितं। तथा च सरहपादाः—

श्रीवज्रामृत इत्यपि भ्रमयीत्यादि॥

[४] चतुर्थपदेन फलहेतुभावं प्रभावं प्रतिपादयति। हिअ इत्यादि। हृदयं प्रभास्वरं तांबूलेनाधिमुच्य कर्पूरं युगनद्धरूपेण फलहेतुसंबन्धेन तमधिमुच्य। शून्यमिति सैव सर्वाकारवरोपेतशून्यता नैरात्मज्ञानयोगिनी कण्ठेति संभोगचक्रे विधृत्य महासुखज्ञानरश्मिना रजनीति स्वकायक्लेशतमः स्वयं नाशितं। तथा च सूत्रके—

फलेन हेतुमासुद्य इत्यादि॥

7. पुच्छआ = पुच्छेन or पुंखेन 'with a feather'; Tib. reads *gshu daṅ* 'धनुषा' for पुच्छआ। 8. 'phyrn bar byed 'to be protected' [ ? 'phyos bar byed 'to be roamed' ]. 9. H. °भाविकेऽपि; lhag par 'आधिक्ये'। 10..10. this line in the original as well as Tib. translation through some cofusion has bee written after the sentence पदस्योत्तरपदेन ध्रुवपदं बोद्धव्यं।

[५] पंचमपदेन वज्रगुरुमाहात्म्यमाह। गुरुवाक्येत्यादि। सद्गुरुवाक्येन धनुः कृत्वा निजमनोबोधिचित्तेन बाणं च। एकरसं बाणमिति उभयोरेकं कृत्वा एकस्वरनिर्घोषेण तमभ्यस्यमानः सन् तेन निर्वाणेन मया शबरपादेन अनाद्यविद्यावासनादोषो हि हतः॥

[६] षष्ठपदेन चित्तस्य यथाभूतं स्वरूपमाह। उमत इत्यादि। सहजपानप्रमत्तो ममचित्तवज्रो हि शबरः। गरुआ रोषेणेति ज्ञानानन्दगन्धेन प्रेरितः सन् महासुखचक्रनलिनीवनोद्देशेन प्रचलितः। तत्र निनम्ने सति गिरिवरेति। उक्तार्थो मया सिद्धाचार्येण कथमन्वेषयितव्यः। तथा च आगमः—

यानानां नास्ति वै निष्ठा यावच्चित्तं प्रवर्तते।
चित्ते तत्त्वे प्रवित्ते[11] हि नयानं न च यायिनः॥०॥२८॥

[ अष्टविंशां चर्यागीत्यां टीका ॥ ]

11. H. प्रवृत्ते ; go bar gyur 'प्रविते, बुद्धे, ज्ञाते'।

॥२१॥

[ राग पटमञ्जरी लुइपादानाम् ]

भाव न होइ अभाव न जाइ।
[1]अइस संबोहे[1] को पतिआइ[2] ॥ [१] ॥

लुइ भणइ बढ़ दुलक्ख[3] विणाणा[4]।
तिअ धाए विलसइ उह[5] लागे णा ॥ ध्रुवपद ॥

जाहेर बाण[6] चिह्न रुव ण जाणी।
सो कइसे आगम[7] वेएँ वखाणी ॥ [२] ध्रु ॥

काहेरे [8]किस भणि[8] अइ दिवि पिरिच्छा।
उदक चान्द जिम साच न मिच्छा ॥ [३] ध्रु ॥

लुइ भणइ [मइ][9] [10]भावइ किस[10]।
जा लइ अच्छम ताहेर उह ण दिस ॥[11] [४] ध्रु ॥

1. H. आइस संबोहेँ; संबोह ∠ संबोध; Tib. reads sans rgyas 'संबुद्ध'। 2. Cf. कहउँ साँचु सब सुनि पतिआहू। चाहिअ धरमसील नरनाहू॥ *Rāmacarita-mānasa of Tulasidāsa*. 3. It is rendered in Tib. as *mashan du med* 'having no mark'. 4. Tib. has ya mtshen 'miracle' for विणाणा [ ∠ विज्ञान ] used in Bengali for miracle. 5. Tib. reads dbyibs 'आकार, shape' for उह [ ∠ ऊह=अनुमान ]। 6. बाण ∠ वर्ण; Cf. Tib. khadog; H. बान। 7. आगम ( =गुरुशिष्यपरंपराप्राप्त शास्त्र ) is called lun in Tib. 8...8. H. किषमणि। 9. bdag gi[s]. 10..10. H. भाइब कीष; bsgom pa ji lta bu 'भाव्यते कीदृशं'। 11. H. जालइ अच्छमता हेर उह ण दिस।

भावो न भवति अभावो न याति ।
एतादृशे संबोधे कः प्रतीयात् ॥१॥

लुइर्वदति मूढ ! दुर्लक्षविज्ञानं ।
त्रिषु धातुषु विलसति ऊह्यालम्बनं न ॥०॥

यस्य वर्णश्चिह्नं रूपं न ज्ञायते ।
स कथम् आगमेन वेदेन व्याख्यायते ॥२॥

कस्य किमुक्त्वा मया दातव्या पृच्छा ।
उदकचन्द्रवत् सत्यं न मिथ्या ॥३॥

लुइर्वदति मया भाव्यते कीदृशं ।
यदादाय अस्मि तस्योह्यते न दिक् ॥४॥

[१] ज्ञानानन्दसुन्दरो हि लुइपादस्तमेवार्थं विशेषयति । भाव न होइ इत्यादि । भावस्तावत् तत्त्वं न भवति । यस्मात् पिण्डग्रहणभेदे विचारेण भावस्योपलंभो न विद्यते । किमभावश्रुतिर्भवति । अभावो ऽपि न भवति असद्रूपत्वात् । ईदृक्संबोधेन कोऽपि सत्त्वः [12]तत्त्वं प्रतीतिकरोति[12] ॥

[ध्रु] ध्रुवपदेन भावस्वरूपदौर्लभ्यं प्रतिपादयति । लुइ भणइ इत्यादि । लूयीपादः सिद्धाचार्यौ हि वदति । अतएव दुर्लक्षं तत्त्वं बालयोगिना लक्षयितुं न पार्यते । यस्मात् त्रैधातुकं कायवाक्चित्ते विलसति क्रीडति । तस्य सन्तानदीर्घह्रस्वपरिमण्डलादिकं । न ऊहे न जानामि । कुत्र नियतं वसतीति ॥

[२] द्वितीयपदेन उक्तार्थं स्पष्टयति । जाहेर इत्यादि । यस्य तत्त्वस्य वर्णचिह्नरूपं नावगम्यते सो ऽपि कथं नानाकाव्ये विनये आगमशास्त्रे वेदे व्याख्यायते च । तथा च नागार्जुनपादाः—

न रक्तपीतमाञ्जिष्ठो वर्णस्तेनोपलभ्यते इत्यादि ॥

12...12. तत्त्वं प्रतीतिकरोति stands for तत्त्वस्य प्रतीतिं करोति ।

[३] तृतीयपदेन तत्त्वस्वरूपमाह । काहेरे इत्यादि । कस्य किमुक्‍त्वा पृथग्जनाय मया सिद्धान्तः प्रदातव्यः। यथोदकचन्द्रो न सत्यं न मृषा भवति। तद्वद् योगीन्द्रस्य भावग्रामप्रतिभासः। स किमर्थो वक्तुं युज्यते। अथ[14] तत्र प्रतीतिं करोति। अवचनत्वात् ॥

[४] चतुर्थपदेन चित्तस्वरूपमाह । लुइ भणइ इत्यादि । वदति लूयीपादः मया भाव्यभावकभावना[नां] अभावेन किं भाव्यं। अतएव [13]यश् चतुर्थरूपं गृहीत्वा[13] तिष्ठामि। तस्यापि गुरुवचनविचारे तस्योद्देशं न ऊहे न पश्यामि। तथा च—

चित्तं निश्चित्य बोधेन अभ्यासं कुरुते यदा।
तदा चित्तं न पश्यामि क्व गतं क्व स्थितं भवेत् ॥०॥२९॥

[ एकोनत्रिंश्यां चर्यागीत्यां टीका ॥ ]

13...13. rkaṅ pa bzuṅ nas 'पादं गृहीत्वा'। 14. H अथं; yaṅ na 'अथ'।

॥३७॥

[ राम मल्लारी[1] भुसुकुपादानां । ]

करुणा मेह निरन्तर फरिआ[2] ।[3]
भावाभाव द्वन्दल[4] दलिआ[5] ॥ [१] ॥

उइत्ता गअण माझें अदभूआ ।
पेखरे भुसुकु सहजसरुआ ॥ ध्रुवपद ॥

जासु सुनन्ते तुट्टइ इन्दिआल[6] ।
निहुए णिअ मन देअ उलाल ॥[7] [२] ध्रु ॥

विसअ विशुद्धें[8] मइ बुज्झिअ आनन्दे ।
गअणह[9] जिम [10]उजोलि चान्दे[10] ॥ [३] ध्रु ॥

ए तिलोए एत [11]वि सारा[11] ।
जोइ भुसुकु फेड़इ[12] अन्धकारा ॥ [४] ध्रु ॥

1. Tib. transcription मल्-ल-रे । 2. *Apabhraṃśa* root फर् from Sanskrit स्फर् (=स्फुर्) is used here in the sense of shaking or driving away. 3. Sñi rje'i sprin ni rgyun mi 'chad par 'pho 'करुणामेघं संतानानुच्छेदेन कंपयित्वा (सारयित्वा वा)'। 4. Tib. rtog ciṅ 'विकल्प' stands for द्वन्दल ∠ द्वन्द्वल =द्विकल्प । 5. H. दलिया । 6. इन्दिआल has two sense (1) इन्द्रजाल 'magic' (2) इन्द्रियजाल 'plurality of senses'; the fomer sense has been rendered in Tib. by the word 'phrul 'black art or magic'; the latter has been explained in the commentary. 7. H. निहुरे णिअ मन ण दे उलास ; निहुअ ∠ Prakrit णिहुअ has two meanings : (1) निभृत 'calm' (2) सुरत 'unian'; This word

करुणामेघं निरन्तरं स्फरित्वा।
भावाभावद्वन्द्वं दलयित्वा ॥१॥

उदितं गगनमध्ये ऽद्भुतं।
प्रेक्षस्व भरे भुसुको! सहजस्वरूपं ॥०॥

यत् शृण्वतः त्रुट्यति इन्द्रियजालं [ इन्द्रजालं वा ]।
निभृतेन निजमनो ददाति उल्लासं ॥२॥

विषयविशुद्धो मया बुद्ध आनन्दः।
गगने यथा उज्ज्वलितं चन्द्रेण ॥३॥

अस्मिन् त्र,लोक्ये एष विसारः।
यो हि भुसुको! दलयत्यन्धकारं ॥४॥

[१] तमेवार्थं महासुखानन्दप्रमोदेन भुसुकुपादः प्रतिपादयति। करुणेत्यादि। करुणमिति भावाभावं ग्राह्यादिविकल्पं दलित्वा निःस्वभावीकृत्य परिशुद्धसंभोगकायो योगीन्द्रस्य गुरुप्रसादप्रस्फुरितं [ ? ०तः ] ॥

[ ध्रु ] अतएव ध्रुवपदेन तस्य प्रभावं प्रतिपादयति। उइत्ता[13] इत्यादि। अतएव आगमः—

प्रभास्वरे अद्भुतयुगनद्धफलोदयो भूतः।

तस्माद् भो भुसुकुपाद गुरुसंप्रदायात् तृतीयानन्दे सहजानन्दस्वरूपं पश्य जानीहि। स्वयमेव आत्मानं संबोध्य वदति ॥

has not been translated in Tib. 8. H. विशुद्धी। 9. nam kha'i mthil du 'गगनतले'। 10...10. zla ba śar 'चन्द्र उदितः'। 11..11. H. विषारा; rnam par brgyuṅ 'विशिष्टसार or विसार'। 12. H. हे भइ to be corrected as फेडइ; Cf. the commentary स्फेटयति, Tib. sel 'remove'. 13. H. उइए; the reading in Carya is उइत्ता।

[२] द्वितीयपदेन तस्य प्रभावं दर्शयति । आसु इत्यादि । यस्य सहजानन्दस्य प्रतीक्षणे इन्दिआलमिति इन्द्रियसमूहं त्रुट्यति पलायते । तथा च सरहपादाः—

इन्दिअ जस्थ विलअ गउ इत्यादि[14] ॥

निहुए इति । निभृतेन निर्विकल्पाकारेण निजमनः बोधिचित्तं वज्रगुरोः प्रसादात् सहजोल्लासं ददातीति । तथा च सरहपादाः—

चिन्ताचिन्त परिहर इत्यादि ॥

[३] तृतीयपदेन मार्गस्यानुशंसामाह । विषयेत्यादि । यथा चन्द्रेण गगनमुद्योतितं तथा मया विषयाणां विशुद्ध्या आनन्देति विरमानन्दे परमानन्दमवगम्य तेन सहजानन्दचन्द्रेण मोहान्धकारं नाशितमिति ॥

[४] चतुर्थपदेन फलप्राप्तित्वात् तस्य प्रवाहमाह । ए ते[?ति]लोए इत्यादि । एतस्मिन् त्रैलोक्ये चतुर्थानन्दव्यतिरेकान्नान्योपायो ऽस्ति । यस्योदयेन सिद्धाचार्यो भुसुकुपादः क्लेशान्धकारं स्फेटयति । तथा च सरहपादाः—

तस्मै नमो यदुदयेन इत्यादि ॥०॥३०॥

[ त्रिंश्यां चर्यागीत्यां टीका ॥ ]

14. *Sarabapāda : Dohākośa* verse 29 ; H....जधु विलीअ.. ।

॥११॥

[ राग पटमञ्जरी आर्यदेवपादानाम् । ]

जहि मण इन्दिअ पवण[1] होइ णठा[2] ।
ण जानमि अपा कहिँ गइ पइठा ॥ [१] ॥

अकट[3] करुण डमरुलि बाजअ ।
आजदेव निरासे[4] राजअ[5] ॥ ध्रुवपद ॥

चान्दरे चान्दकान्ति जिम पडिभासअ[6] ।
चिअ विकरणे[7] तहि टलि[8] पइसअ[9] ॥ [२] ध्रु ॥

छाड़िअ भय घिण लोआचार ।
चाहन्ते चाहन्ते सुण विआर ॥ [३] ध्रु ॥

आजदेवेँ सअल विआरिउ[10] ।
भय घिण दूर[11] णिवारिउ ॥ [४] ध्रु ॥

1. Chuṅ 'water' [ ? rtung 'wind' ]. 2. H. ण ठा ; shugs gyur 'नष्ट' । 3. Cf. Bengali आकाट ; ya mstshan 'strange, wonderful'. 4. dmigs pa med pa 'without thinking'; the commentary explains it as निरालंबने । 5. H. राजइ । 6. H. पतिभासअ । 7. rnam 'gyur 'विवर्तन' । 8. 'phaṅs nas 'having shaken'; the root टल् 'move, shake' is current in Bengali as well as Hindi. 9. H. पइसइ । 10. H. विहारिउ ; rnam par dpyod par byed 'विचारित' । 11. H. डुर ; riṅ du 'दूर' ।

यत्र मन इन्द्रियपवना भवति नष्टः ।
न जानामि आत्मा क्व गत्वा प्रविष्टः ॥१॥

आश्चर्यं करुणा डमरुका वाद्यते ।
आर्यदेवो निराशेन राजते ॥०॥

चन्द्रे चन्द्रिका यथा प्रतिभासते ।
चित्ते विकरणः ( =विकल्पः ) तत्रागत्य प्रविशति ॥२॥

परित्यज्य भयघृणालोकाचारान् ।
पश्यन् पश्यन् शून्यविचारं ॥३॥

आर्यदेवेन सकलमपि विचारितं ।
भयघृणे दूरं निवारिते ॥४॥

[१] तमेवार्थं प्रमुदिता आर्यदेवपादाः प्रतिपादयन्ति जहि मण इत्यादि । यस्मिन् प्रभास्वरे संसारमण्डलादिक्रमेण विषयपवनेन्द्रियादिकं निःस्वभावीकरणं । तत्र प्रविष्टे सति अपा इति चित्तराजस्य उद्देशं न जानामि क्व गतः ॥

[ध्रु] ध्रुवपदेन आनन्दं दृढयति । अकटेति । आश्चर्यं । करुणेति संवृतिबोधिचित्तं गुरुसंप्रदायात् । डमरुकेति अनाहत शब्दं करोति । अनाहतं रुतं[12] ज्ञानं विबुध्यते । अतएव आर्यदेवपादः । निरालम्बेन सर्वधर्मानुपलंभयोगेन राजते शोभते ।

[२] द्वितीयपदेन विषयस्वरूपमाह । चान्दरे इत्यादि[13] । यथा अस्तं गते चन्द्रमसि तस्य चन्द्रिका तत्रैव अन्तर्भवति । चिअ इति । तथा चित्तराजोऽपि यदा अचित्ततां गच्छति प्रभास्वरं विशति तदा तस्य विकल्पावली तत्रैव लीना भवतीति । तथा च आगमः—

अस्तं गते चन्द्रमसीव नूनं नीरेन्दवः संहरणं प्रयान्ति ।
चित्ते हि तद्वत् सहजे निलीने नश्यन्त्यमी सर्वविकल्पदोषाः ॥

12. H. हृतं ; sgra 'रुत' । 13. H चान्देरित्यादि ।

[३] तृतीयपदेन भावस्य निरंशतामाह। छाडिअइत्यादि। अतएव मया सिद्धाचार्येण भयलज्जादिकं लोकस्य व्यवहारः परित्यक्तः। गुरुवचनमार्गनिरीक्षणेन शून्यमिति। भावं नैरात्मरूपं दृष्टम् ॥

[४] चतुर्थपदेनात्मानुशंसामाह। आर्यदेवेत्यादि। आर्यदेवपादेन सद्गुरुप्रसादात् नैरात्म्यधर्मासुखीकरणे सर्वं संसारदूषणं विफलीकृतमिति ॥०॥३१॥

[ एकत्रिंश्यां चर्यागीत्यां टीका ॥ ]

॥३२॥

[ राग देशाख सरहपादानाम् । ]

नाद न विन्दु न रवि शशि मंडल ।
चिअराअ सहावे मुकल ॥ [१] ॥

[1]उजुरे उजु[1] छाड़ि मा लेहुरे व[ा]ङ्क[2] ।
निअडि[3] बोहि मा जाहुरे लाङ्क[4] ॥ ध्रुवपद ॥

[5]हाथेर काङ्कण मा लेउ दापण[5] ।
अपणे अपा बुझतु निअ मण ॥ [२] ध्रु ॥

पार उआरेँ सोइ गजिइ[6] ।
दुज्जनसङ्गे[7] [8]अवसरि जाइ[8] ॥ [३] ध्रु ॥

वाम दाहिण जो[9] खाल विखला[9] ।
सरह भणइ बापा उजुबाट भइला ॥ [४] ध्रु ॥

1..1. draṅ po'i lam 'ऋजु मार्ग'। 2. gshan 'अन्यत् i. e. अनृजु'। 3. H. निअहि ; ñe bar 'निकट ; Apabhraṃśa : निअड़'। 4. लाङ्क < लङ्का stands for 'दूर देश' ; Cf. Tib. ṅa du [? riṅ du = at a distance']. 5...5. Cf. Hindi proverb : हाथ कंगन को आरसी क्या ; H. हाथेरे काङ्काण मा लोउ दापण : ma len 'don't take = मा लेउ'। 6. H. गजिइ ; The commentary explains it as मज्जन्ति। 7. H. •साङ्गे। 8..8. 'chi bar 'gyur 'मृत्युमवाप्नोति' ; Comm. संसारसमुद्रे मज्जन्ति। 9...9. doṅ daṅ ma yaṅ 'गर्तागर्तौ' but the original has the sense of 'ditches and pits'.

नादो न बिन्दु र्न रवि-शशि-मंडलं ।
चित्तराजः स्वभावेन मुक्तः ॥१॥

ऋजुम् अरे ऋजु परित्यज्य मा गृहाण अरे वक्रं
निकटे बोधि र्मा याहि रे लंकां ( =दूरं ) ॥०॥

हस्ते कंकणं मा गृहाण दर्पणं ।
आत्मना आत्मा बुध्यतु निजमनः ॥२॥

पारापरपारयोः स एव मज्जति ।
दुर्जनसंगेन [यो] अपसृतो याति ॥३॥

वामदक्षिणयोर्यौ गर्तापगतौ ।
सरहो वदति [तयोः] तात ऋजु वर्त्म भूतं ॥४॥

[१] तमेवार्थं सर्वधर्माधिगमेन सिद्धाचार्यो हि सरहपादो जनार्थं प्रतिपादयति । नाद न इत्यादि । सद्गुरुवदनामृतलहरीप्रभावेण परमार्थविदां चित्तरत्नं नादबिन्द्वादिविकल्पपरिहारात् स्वभावेन परिमुक्तं । अनाद्यविद्याज्ञानपटलाः पुनरन्यथाभावं पश्यन्ति । तथा च सरहपादाः—

अह्नो गटेत्यादि ॥

[ध्रु] ध्रुवपदेन मार्गस्यानुशंसामाह । उजु इत्यादि । अतएवावधूतीमार्गं विहाय योगीन्द्रस्य नान्योपायो विद्यते । तेन गच्छन् बोधिं जिनपुरं[10] अतीव संनिहितं । रे संबोधनं । भो बालयोगिन् वक्रमार्गं मा भज । पुनः संसारी मा भव ॥

[२] द्वितीयपदेन आत्मप्रत्ययितामाह । हाथेर इत्यादि । भो हे बालयोगिन् वज्रगुरुप्रसादात्निजमनसा बोधिचित्तस्य स्वरूपं जानीहि । तेन तवानुत्तरधर्मसाक्षात्कारित्वं भविष्यतीति ॥

10. H. निज० ; rgyal po'i 'जिन०' ।

[३] तृतीयपदेन बोधिचित्तस्यानुशंसामाह। पार उआरे[11] इत्यादि। पारेति परमार्थेन तदेव बोधिचित्तं योगिवरैरनुगम्यते। तदनु तस्य गुरुप्रसादात् महामुद्रासिद्धिं प्राप्नुवन्ति ते। उआर[12] भवे पृथग्जनैरनुगम्यते। तेन ते मोहादिदुर्जनसंगेन संसारसमुद्रे मज्जंतीति॥

[४] चतुर्थपदेन पुनर्मार्गस्यानुशंसामाह। वामदाहिणेति। सुगमं। अतएव सरहपादाः। महासुखपुरगमनाय अवधूतीमार्गमतीव सुसारमवक्रं च। तथा च चर्यान्तरं।

घाट न गुम्मा खड़तडि[13] बोहअ।
अक्षि बुझिआ माग चाली॥[14]

[ द्वात्रिंर्शा चर्यागीत्यां टीका॥ ]

11. H. पारोआरे। 12. H. देआर। 13. H. खड़्वति। 14. *Caryā* 15, pada 4; There आखि बुजिअ is read for अक्षि बुझिआ।

॥३३॥

[ राग पटमञ्जरी ढेण्ढण[1] पादानाम् । ]

टालत[2] मोर घर नाहि पड़वेशी[3] ।
हाड़ीत भात नाहि निति आवेशो[4] ॥ [१

[5]वेङ्गस साप चड्हिल[5] जाअ ।[6]
दुहिल दुधु कि बेण्टे समाअ[7] ॥ ध्रुवपद

बलद बिआअल गविआ बाँझे ।
पिटा[8] दुहिअइ[9] ए तिणा साँझे ॥ [२] ध्रु ॥

जो सो बुधी सोध निबुधी ।
जो[10] सो चोर[10] सोइ साधी[11] ॥ [३] ध्र ॥

निति निति सिआला सिहे सम जुझअ ।[12]
ढेण्ढण पाएर गीत विरले बुझअ ॥ [४] ध्र ॥

1. Tib. transcription : टेण्-ट-ण । 2. टाल 'elevated place' has been rendered in Tib. as groṅ khyer 'नगर' । 3. पड़वेशी ∠ Prakrit पडिवेसी ∠ Sanskrit प्रतिवेशिन् 'neighbour' ; Cf. Hindi पड़ोसी । 4. आवेशी ∠ आवेशिक 'guest' has been rendered in Tib. 'drim pa = 'brimpa 'one who distributes, परिवेशिन्'। 5...5. H. वेङ्ग (ग) संसार... । Tib. sbal pa yis spral [ ? sbrul ] ñid 'ded [ ? 'ded ] pa ñid du byed 'even the serpent is being chased by the frog, भेकेन सर्पोऽपि विद्राव्यते । 6. Prakrit root चड्ड stands for Sanskrit वृध् as well as खण्ड् ; the second sense is to be taken here. 7. H. समाय । 8. Tib. translates पिटा 'pale' as khri 'खट्ट' । 9. H. दुहिए । 10...10. H.

नगरे मम गृहं नास्ति प्रतिवेशी ।
हंडिकायां भक्तं नास्ति नित्यमावेशी ॥१॥

व्यंगेन [ =मंडूकेन ] सर्पः खंडितो याति ।
दुग्धं दुग्धं किं [स्तन-] वृन्तं [ =चूचकं ] विशति ॥०॥

बलीवर्दः प्रसूतः गौ बन्ध्या ।
पीठके दुह्यते एष त्रिसंध्यं ॥२॥

या सा बुद्धिः सेह निबुद्धिः ।
यः स चौरः स एव साधुः ॥३॥

नित्यं नित्यं शृगालः सिंहेन समं युध्यति ।
ढेण्ढणपादस्य गीतं विरलो बुध्यति ॥४॥

[१] तमेवार्थं परमानन्दसन्दोहमुदितढेण्ढणो[13] हि सिद्धाचार्यः सन्ध्याभाषया टालत इत्यादि । टा इति टमालम्[14] असद्रूपं कायवाक्चित्तस्य षष्ठ्युत्तरशतप्रकृतिदोषं यस्मिन् समये महासुखचक्र लयं गतं तदेव मम गृहं, पार्श्वस्थचन्द्रसूर्यौ तमेव वज्रजापक्रमेण तत्रैवान्तर्लीनौ । हाड़ीति[15] । स्वकायाधारं । भक्तं तस्य संवृतिबोधिचित्ताधिरूपं[16] । गुरुसंप्रदायात् न[17] तदुपलम्भोऽस्ति अतएव नैरात्म्यरूपं तया योगीन्द्रो मित्यं तमाविशति । पुनः पुनश्चेति मनसि[18] आरोपयति ।

---

षो चउर । 11. साधी ∠ साधु 'leading to the goal' [ i. e. साधक in this place ] has been translated in Tib. as mkhar sruṅs 'कोट्टपाल' । According to the comm. it is to be read दुसाधी i. e. दुःखेन साधकः । 12. H. षिआला षिहे षम जुज्झअ । 13. Tib. transcription : टेण्-टे-न । 14. Tib. gives transliteration as ट-म-लम् । 15. H. हण्डीति । 16 अधिरूप is rendered in Tib. as rnam pa śes pai ṅo bo 'अविस्वभाव' । 17. H. मे (म) ; min 'नास्ति, न' । 18. H. सिसमा० ; Sems la 'मनसि' ।

[भु] भुवपदेन तमेवार्थं द्रढयति। वेङ्गेत्यादि। विगताङ्गं यस्य स व्यङ्गः। अङ्गशून्यत्वेन तं [19]प्रभास्वरं बोद्धव्यं[19]। वहन्तौ [20]सर्पति गच्छतीति सर्पः[20] तदेव वायुरूपं तेन व्यङ्गेन प्रभास्वरेण विज्ञानपरश्चोदितः। दुहिल इति। कर्ममुद्राप्रसंगाद् वज्राग्राद्[21] आगतं यद् बोधिचित्तं। योगीन्द्रस्य बेण्टेमिति। मूलं महासुखचक्रं गच्छति किमद्भुतमिति।

[२] द्वितीयपदेनाभ्यासविशेषमाह। बलद[22] इत्यादि। बलं मांसदेहविग्रहं[23] ददाति बलदस्तदेव बोधिचित्तं आभासत्रयप्रसूतं। गावीति योगीन्द्रस्य गृहणी बंध्या नैरात्मा तमधिकृत्य। पीठकं स्वकुलिशाग्रे गुरुसंप्रदायात्तस्याभासदोषं। दोहनमिति निःस्वभावीकरणं क्रियते। संध्या-त्रयमिति। अहर्निशं योगीन्द्रेणेति। तथा च सरहपादाः—

कुलिस सरोरुह जोएँ जोइउ।
णिम्मलपरम महासुख बोहिउ॥
खणेँ आणन्दभेउ तहिं जाणइ।
लक्ख लक्खणहीण परिआणइ॥[24]

[३] तृतीयपदेन स्वरूपपरिचयमाह। [25]जो सो बुधीत्यादि[25]। बालयोगिनां या बुद्धिः सविकल्पज्ञानं सा परमार्थविदां [26]प्रतिगुरुप्रसंगान्निरुपलंभरूपा[26]। तथा च

यदिदं सनिमित्तसुखं तदेव महतां निमित्त[27]परिहीणमिति।

अतोऽपि य एव चित्तराजचोरः। अदत्तादानं करोति। स एव भावविचार्यमाणः[28]। तद्विपक्षक परमार्थरूपः। अतएव बालयोगिनां दुःसाध्यं परमार्थसत्यं तैः दुःखेन साध्यते इति[29]॥

19..19. H. प्रभास्वरबोद्धव्यं। 20...20. H. सयति गच्छतीति सयः। 21. H. वज्राग्र[रा]दा॰; do rje'i rtse mor 'वज्राग्राद्'। 22. H. बलद्दा। 23. H. मानसाहे(दे)॰; śa bo de ha 'मांसदेह'। 24. *Sarahapāda*: *Dohāsamgraha* verse IX. H. कुलिशसरोरुहसंजोए जोइणि मनपवन महासुह होइ। खने आनन्द भेअत णह लखलखहीन तहि परिमाणहा। 25..25. योसो बुद्धीत्यादि। 26..26. H. प्रति गुरु॰। so sor bla ma = प्रतिगुरु। 27. H. ज्ञानव; mthsan ma 'निमित्त'। 28. ॰माण शति। 29. H. साधि(ध्य) तमिति; bsgrub pa shes so 'साध्यते इति'।

[४] चतुर्थपदेन स्वरूपभावमाह । मरणादिके सर्वत्र बिभेति इति कृत्वा स एव समानचित्तः[30] शृगालतुल्यः । कल्याणमित्राधिष्ठानात् प्रभास्वरविशुद्धो भवति । तदा युगनद्धसिंहेनेह स्पर्धां करोति । ईदृश्यां ढेण्टणपादस्य चर्यायां विरलः परिविशुद्धचित्तः[31] सततादेशः[32] कोऽपि महासत्त्वोऽर्थावगमं करिष्यतीति ॥०॥३३॥

[ त्रयस्त्रिंशत्यां चर्यागीत्यां टीका ॥ ]

30. H. स [ं] सार (न) चित्त— ; daṅ bcas pa'i sems 'सहचित्त, समानचित्त i. e. पृथग्जनचित्त। 31. H. पक्षिविशुद्ध० ; yoṅ su dag pa 'परिविशुद्ध०'। 32. rtag ta lta ba 'सततदर्शनः'।

॥३४॥

[ राग बराड़ी दारिकपादानाम् । ]

¹सुन करुण रे¹ अभिनचारेँ² काअवाक्‌चिएँ³ ।
विलसइ दारिक गअणत पारिमकुलेँ⁴ ॥ [१] ॥

अलक्ख-लक्ख चिआ महासुहेँ ।⁵
विलसइ दारिक गअणत पारिमकुलेँ ॥ ध्रुवपद ॥

किन्तो मन्ते किन्तो तन्ते किन्तो रे झाण वखाणे ।
अपइठान⁶ महासुहलीलेँ⁷ दुलक्ख परमनिवाणे ॥ [२] ध्रु ॥

दुःखेँ सुखे एकु करिआ भुञइ ⁸इन्दी जाणी⁸ ।
स्वपरापर न चेवइ दारिक सअलानुत्तर माणी ॥ [३] ध्रु ॥

राआ राआ राआ रे अवर राअ ⁹मोहे रे बाधा⁹ ।
लुइपाअपए दारिक द्वादश¹⁰भुअणे लाधा ॥ [४] ध्रु ॥

1...1. H. सुनकरुणरि । 2. H. अभिन चारेँ ; dbye ba med pas 'भेदाभावेन' ; the commentary explains the word as अभेदोपचारेण ; the reading in Caryā, therefore, to be corrected as अभिनचारेँ = अभिन्नोपचारेण । 3. H. °चिअ । 4. pha rol mchog gi 'परमपार°' । 5. H. अलक्षलक्खचित्ता महासुह ; according to the commentary the word °चित्त is to be in the instrumental case but in the reading of Caryā it is in the nominative case. 6. अपइठान = अप्रतिष्ठान ; Tib. renders as raṅ gnas 'आत्मस्थान ; Apabhraṁśa : अप्पट्ठान । 7. H. °लीणे ; the commentary °लीलया ( =Apabhraṃśa : लीलेँ )। 8...8. H. इन्दीजानी ; Tib. renders wrongly as mig 'phrul ba 'इन्द्रजाल' । 9...9. H. मोहेरा बाधा ; rmoṅs pas chiṅ 'मोहेन बद्धा' ; the commentary explains as विषयमोहेन बद्धास्तिष्ठन्ति । 10. bcu 'दश°' ।

शून्यकरुणेन अरे अभिन्नचारेण कायवाक्चित्तेन ।
विलसति दारिको गगनात् पारिमकूले ॥१॥

अलक्ष्यलक्षणेन चित्तेन अक्षक्ष्यलक्षणचित्तो वा महासुखे ।
विलसति दारिको गगनात् पारिमकूले ॥०॥

किं ते मन्त्रेण किं ते तंत्रेण किं ते अरे ध्यानव्याख्यानेन ।
अप्रतिष्ठानमहासुखलीलया दुर्लक्ष्यं परमनिर्वाणं ॥२॥

दुःखेन सुखम् एकीकृत्य भुनक्ति इन्द्रियं ज्ञात्वा ।
स्वपरापरं न पश्यति दारिकः सकलानुत्तरं मत्वा ॥३॥

राजन् राजन् राजन् अरे अपरे राजानो मोहेन बद्धाः ।
लूयिपादपद्मेन दारिकः द्वादशभुवनं लब्धवान् ॥४॥

[१] तमेवार्थं गंभीरधर्माधिगमेन सिद्धाचार्यों हि दारिकः प्रतिपादयति । सुन करुणेत्यादि । करुणेति संवृतिसत्यं । शून्यमिति तस्य परिनिष्ठिनरूपं परमार्थसत्यं । उभयमभेदोपचारेण गृहीत्वा वज्रगुरुप्रसादात् सिद्धाचार्यो हि दारिकः । गगनमिति आलोकादिशून्यत्रयं बोद्धव्यं । तस्य पारं प्रभास्वरो महासुखेन परिशुद्धकायवाक्चित्ताविर्भावनियमेन विलसति । तथा च **आगमः**—

भावेभ्यः शून्यता नान्या न च भावो ऽस्ति तां विना इत्यादि ॥

[ध्रु ] ध्रुवपदेन तमेवार्थं द्रढयति । अलक्ख[11]मिति । अतएव अनुत्पादेन लक्ष्यते चित्तमलक्ष्यं [12]तेन प्रभास्वरचित्तेन विलसति[12] । सुगमपरं ॥

[२] द्वितीयपदेनान्यं संबोधयति । किन्नो इत्यादि । मन्तेनेति बाह्यमन्त्रजापेन । रे वढ[13] बालयोगिन् । किं तव तन्तेनेति तन्त्रपाठेन च । ध्यानव्याख्यानेन वा किम् ।

11. H. अलखमिति । 12...12. H. तेन प्रभास्वरे चित्ते न विलसति ; de yis 'di gsal ba'i sems kyis rnam par rol bar byed 'तेन प्रभास्वरचित्तेन विलसति' । 13. It is not found in the Caryā.

अप्रतिष्ठानमहासुखलीलया तव निर्वाणं दुर्लक्ष्यं। गुरुचरणकिरणप्रसादात् प्रसिद्धमेव। तथा च सरहपादाः—

मन्त न तन्त न इत्यादि[14] ॥

[३] तृतीयपदेन मार्गस्यानुशंसामाह। दुःखेति। दुःखेनेति परमार्थसत्येन सह एकीकृत्य भो बाल्योगिन् गुरुं पृष्ट्वा विषयेन्द्रियोपभोगं कुरु। एतदुपायेन सकलानुत्तरं गत्वा दारिको हि सिद्धाचार्यः संसारे स्वपरापरं विभागं भेदं न पश्यतीति। तथा च धोकड़िपादाः—

संसारे बहु संसरन्ति सुधियो [15]तेन प्रभावेण च[15]
भावाभावयुगे विचार्य सकलं स्वप्रज्ञया संस्थितं।
पक्षापक्षमवेक्ष्य [16]वादिगदितं किंचिन्[17] न पश्याम्यहं
ग्राह्यग्राहकवर्जितं हि मुदिभिर् [18]दुःखैर् यथा[सं]ततं ॥

[४] चतुर्थपदेन स्वकीयानुशंसामाह। राआ इत्यादि। उक्तित्रयेण स्वकीयं कायैश्वर्यादिकं गुणं सूचितं। अन्ये ये देवा नागेन्द्रादयो विषयमोहेन बद्धास्तिष्ठन्ति। वयं पुनर्लूयीपादप्रसादात् द्वादशभूमिना जिनसमाः ॥३४॥

[ चतुस्त्रिंश्यां चर्यागीत्यां टीका ॥ ]

14. *Sarahapāda : Dohākośa* verse 23. 15...15. H. एव प्रभावेऽपि च; de yis mthu yis ṅi 'तेन प्रभावेण च'। 16. पक्ष्यापक्ष्य० ; phyogs daṅ phyogs min 'पक्षापक्ष०'। 17. H. पक्षं ; cuṅ zad 'a little, किंचित्'। 18. मुदिभिः stands for मुद्भिः ; Cf. Tib. dga' ; H. मुनिभिः।

॥३५॥

[ राग मल्लारी भादेपादानाम् । ]

एतकाल हँउ अच्छिल[1] स्वमोहें[2] ।
एवेँ मइ बुझिल सद्गुरुबोहें ॥ [१] ॥

एवे चिअराअ [3]मोकु णठा[3] ।
गअणसमुदे[4] टलिआ पइठा ॥ ध्रुवपद ॥

पेखमि दहदिह सव्वइ शून ।
चिअ विहुन्ने पाप न पुन्न[5] ॥ [२] ध्रु ॥

बाजुले दिल [6]मो लक्खु[6] भणिआ ।
मइ अहारिल गअणत पणिआ ॥ [३] ध्रु ॥

भादे भणइ अभागे[7] लइला[8] ।
चिअराअ मइ अहार कएला ॥ [४] ध्रु ॥

1. H. अच्छिलें । 2. śin tu rmoṅs 'संमोह, अतिमोह' । 3...3. H. मकु ण ठा ; bdag gi..shi bar gyur 'मम..शांतः'; the commentary मम विनष्ट- ; the reading, therefore, to be corrected as मोकु णठा । Cf. मोको as used by *Tulasidāsa* in *Vinayapatrikā* pada No 181 ; मोको और ठौर न सुटेक एक तोरिए । 4. H. गणसमुदे ; mkha' rgya mtshor 'गगनसमुद्रे' । 5. seṅ 'clean, hence पुण्य' । 6...6. H. मोहकखु ; bdag la mtshan ma 'मह्य' लक्ष्यं ; *Apabhraṃṣa* ; मो लक्खु' । 7. अभाग = भागहीन, संपूर्ण, अविकल ; cha śas med 'part-less'. 8. H. लइआ ; but the rhyme here indicates the reading लइला ।

एतावत्कालमहं आसं स्वमोहेन।
इदानीं मया बुद्धं सद्गुरुबोधेन ॥१॥

इदानीं चित्तराजो मामको मत्कृते वा नष्टः।
गगनसमुद्रं गत्वा प्रविष्टः ॥०॥

प्रेक्षे दशदिक्षु सर्वमेव शून्यं।
चित्ते विधूते पापं न पुण्यं ॥२॥

वज्रकुलेन दत्तं मम मह्यं वा लक्ष्यं भणित्वा।
मया आहारितं गगने पानीयं ॥३॥

भद्रो वदति अभागो गृहीतः।
चित्तराजो मया आहारीकृतः ॥४॥

[१] ज्ञानानन्दप्रमोदयुक्तो हि सिद्धाचार्यो भद्रपादस्तमेवार्थं प्रतिपादयति। एतकालेत्यादि। अनादिसंसारे कल्याणमित्रसंसर्गात्। मोहमिति बाह्यविषयसंगेनानल्पकल्पान्तं तावत् स्थितो ऽस्मि। इदानीं बुद्धानुभावात् सद्गुरुबोधप्रसङ्ग न मया चित्तस्य स्वरूपमवगतम्।

[ध्रु] ध्रुवपदेन तमेवार्थं द्रढयति। एवेमित्यादि। इदानीं पविपद्मसंयोगाक्षरसुखे चित्तराजो मम विनष्टगमनमिति प्रकृतिप्रभास्वरे प्रविष्टमिति।

[२] द्वितीयपदेनाभ्यासस्वरूपमाह। पेखमीत्यादि। सर्वधर्मानुपलंभयोगेन यं यं दिग्भागं पश्यामि तं तं सर्वशून्यं प्रभास्वरमयं प्रतिभाति अतएव [9]चित्तस्यानुदये[9] न पापपुण्यं संसारबन्धनं च जानामीति। तथा च सरहपादाः—

अग्गें पच्छें [10] इत्यादि।

9...9. bshi pa śar bas 'चतुरुदयेन' [?]। 10. *Sarahapāda: Dohākoṣa* verse 28.

[३] तृतीयपदेन वज्रप्रभावमाह । वाजुलेत्यादि । वज्रकुलेनेति । वज्रगुरुणा लक्ष्यमिति भाव्यमुक्तं मह्यं चतुर्थानन्दोपायं प्रदत्तं । मया पुनः सादरनिरन्तराभ्यासेन । गगनेति प्रभास्वरसमुद्रे आहारीकृतम् ।

[४] चतुर्थपदेनात्मस्वरूपमाह । भणइ इत्यादि । अभाग इति । अनुत्पादभागगृहीतोऽहं भद्रपादः । यदानादिभवविकल्पाधारचित्तराजो मया सर्वधर्मानुपलंभसमुद्रे प्रवेशितं ॥०॥३५॥

[ पंचत्रिंश्यां चर्यागीत्यां टीका ॥ ]

॥३६॥

[ [1]राग पटमञ्जरी कृष्णाचार्यपादानाम्[1] ]

सुन बाह तथता पहारी।
मोहभण्डार लइ[2] सअला अहारी ॥ [१] ॥

घुमइ[3] ण चेवइ सपरविभागा।
सहज निदालू काह्निला लाङ्गा ॥ ध्रुवपद ॥

चेअन न वेअन [4]भर निद गेला[4]।
सअल मुकल[5] करि सुहे सुतेला ॥ [२] ध्रु ॥

स्वपणे मइ देखिल तिहुवण सुण।
घोरिअ[6] अवणागमण विहुण[7] ॥ [३] ध्रु ॥

शाखि[8] करिब जालन्धरि पाए[9]।
पाखि[10] न चाहइ[11] मोरि पाण्डिआचाए[12] ॥ [४] ध्रु ॥

1...1. Omitted in Tib. see also notes 13, 14. 2. H. लुइ ; blaṅs nas 'आदाय, गृहीत्वा'। 3. The root घुम् 'sleep' is current in Bengali. 4..4. Cf. Hindi phrase : भरी नींद में होना। भर has been rendered as śin tu 'अत्यन्तं' in Tib. 5. H. सुफल ; grdol bar 'मुक्त, मोक्ष' *Apabhraṃśa* मुकल। 6. H. घोरिअ ; 'bres par byas nas 'संमिश्र्य' ; the reading घोरिअ stands for घोलिअ from the *Prakrit* root घोल् 'mix.' see also not 18. 7. H. विहल ; bral bar gyur 'is separated from' indicates the reading विहुण for विहल। 8. H. शाथि ; mṅon sum ñid du 'साक्ष्यं' ; Cf. साखी of *Kabīra*. 9. H. पात्र ; shabs 'पाद, *Apabhraṃśa* : पाअ'। 10. tsar 'near' ; the commentary संनिधान। 11. H. राहअ ; lta mi byed = न पश्यन्ति of the commentary ; corrected form चाहइ is to be derived from the root चाह् ∠ चक्ष् 'see' current in Bengali. 12. पण्डिआचादे।

शून्यं बाहुः [तेन] तथतां प्रहृत्य ।
मोहभंडारं गृहीत्वा सकलम् आहारितं ॥१॥

स्वपिति न चेतयति स्वपरविभागं ।
सहजनिद्रालु कृष्णः नग्नः ॥०॥

चेतना न वेदना पूर्णनिद्रां गतः ।
सकलं मुक्तं कृत्वा सुखे सुप्तः ॥२॥

स्वप्ने मया दृष्टं त्रिभुवनं शून्यं ।
संहृत्य [ अवधूतिकया ] गमनागमनं विधूनय ॥३॥

शाक्षिणं करिष्यामि जालन्धरपादं ।
पक्षं न पश्यन्ति मम पंडिताचार्याः ॥४॥

[१] सहजानन्दसुन्दरो हि कृष्णाचार्यस्[13] तमेवार्थं प्रतिपादयति । सुन इत्यादि । शून्यमिति । आलोकोपलब्धिसंध्याज्ञानेन वासनारागं बोद्धव्यं । योगीन्द्रेण तस्य वासनादोषं तथताखड्गेन प्रहृत्य मोहं विषयासंगलक्षणं सकलम[ा]हारितमिति ॥

[ध्र ] ध्रुवपदेन ध्यानलक्षणमाह । घुमइ ण इत्यादि । सहजानन्दयोगनिद्रां यातीति न चेतयति । न तत्र भ्रष्टो भवति । अतएव कृष्णाचार्यसुन्दरो [14]हि सहजानन्दयोगनिद्रालुः । तथा च द्विकल्पे—

मइ गरलह भक्षणे इत्यादि ।

तस्यां योगनिद्रायां ॥

[२] द्वितीयपदेन तमेवाह । न चित्तचेतनाविकल्पो [15]न वेदनाविकल्पोपि ते[15] अतएव ज्ञानेन । सकलमिति त्रैलोक्यं परिशोध्य निर्भयं यथा भवति तथा ज्ञाननिद्रां गतः ।

13. This supports that the author of the gīti is काह्न पाद । 14. This stands for काह्निला of the Caryā which is another evidence that the authoship of the Caryā belong to काह्न पाद । 15...15. बोधिनाद्यते, tshor ba yaṅ..rnam par mi rtog pa'o 'न वेदनाविकल्पः or वेदनापि न विकल्पते'।

[३] तृतीयपदेन स्वप्रतिभासज्ञानमाह । स्वपणेत्यादि[16] । अवणगवणमिति[17] । पूर्वोक्तक्रमेण चन्द्रसूर्ययोर्यातायतं खंडयित्वा । घोरिअ इति[18] । अवधूतिकापवनं च सहजानन्द [ ] प्रवेशयित्वा । मया स्वप्नवत् त्रिभुवनं दृष्टं शून्यं च । तथा च आगमः—

यथा कुमारी स्वप्नान्तरेषु स्वपुत्रं[19] जातं मृतं च पश्यति । जाते ऽपि तुष्टा मृते दौर्मनस्का । एवं जानीथ सर्वधर्मान् ॥

[४] चतुर्थपदेन वज्रगुरुमाहात्म्यमाह । शाखि करीत्यादि । श्रीगुरुजालन्धरिपादान् यस्मिन् धर्मे साक्षिणः कृत्वा तेषां पादाब्जरेणुगणप्रसादात् । ये ये पुस्तकदृष्टिगताः पण्डिताचार्याः । ते ते मम पाखि[20] संनिधानान्तरमपि न पश्यन्ति ॥३६॥

[ षट्त्रिंश्यां चर्यागीत्यां टीका ॥ ]

16. H. स्वपने० । 17. H. ०गवन० । 18. H. घानिकेति ; this word is not seen in the *Caryā*. The Tib. rendering 'dres par byas संमिश्र्य, Apabhraṃśa घोलिअ' stands for घोरिअ in the *Caryā*. 19. H. सा पुत्रं ; de yi bu 'स्वपुत्र' । 20. H. पाश [?] ; पाखि is the reading in the line of *Caryā*. Tib. rts bar 'मूल' [ ? rtsar 'पक्ष, पार्श्व ∠ पाश, Hindi पास ( =near ), Bengali पाश ( side )' ].

॥२७॥

[ राग कामोद[1] ताडकपादानाम् । ]

अपणे नाहिँ सो काहेरि शङ्का ।
ता महा[2] मुदेरी टुटि गेलि कङ्खा[3] ॥ [१] ॥

अनुभव सहज मा भोल रे जोइ[4] ।
चौकोट्टिविमुका जइसो तइसो होइ ॥ ध्रुवपद ॥

जइसने इछिलेसि[5] तइसन आछ[6] ।
सहज पथक[7] जोइ भान्ति नाहि[8] वास ॥ [२] ध्रु ॥

[9]बाण्ड कुरुण्ड[9] सन्तारे जाणी ।
वाक्पथातीत काँहि वखाणी ॥ [३] ध्रु ॥

भणइ ताडक एथु नाहि अवकाश ।
जो बुझइ ता गले गलपास ॥ [४] ध्रु ॥

1. dga' ba ster ba 'कामद' । 2. Omitted in Tib. 3. H. कन्या ; 'dod pa 'desire, कांक्षा > कंखा' । 4. H. जोई । 5. H. अछिलेसि ; 'dod pa 'इच्छसि' । 6. H. अच्छ । 7. H. पियक ; lam 'पथक' । 8. H. माहो ; ma 'न, नों' ; माहो therefore to be corrected as नाहि । 9...9. H. बाण्डकुरु ; snod spyad 'स्थाली, कुण्ड' ; the commentary ब[ा]ण्डकुरुण्ड ।

आत्मीयो नास्ति तत् कस्य ( भवेत् ) शंका ।
सा महामुद्रा भङ्गं गता कांक्षा ॥१॥

अनुभवसहजं मा विस्मर अरे योगिन् ।
चतुष्कोटिविमुक्तो यादृशस्तादृशो भव ॥०॥

यादृशमिच्छसि तादृशस्तिष्ठ ।
सहजपथे योगिन् भ्रान्तिं न वासय ॥२॥

भाण्डकुरुण्डं संसारे ज्ञातव्यं ।
वाक्पथातीतं कथं व्याख्यातव्यं ॥३॥

वदति ताडकः अत्र नास्ति अवकाशः ।
यो बुध्यति तस्य गले गलपाशः ॥४॥

[१] ज्ञानपानप्रमोदेन सिद्धाचार्यो हि ताडकस्तमेवार्थं प्रतिपादयति । अपणेत्यादि । गुरुचरणरेणुप्रसादात् तथागतवचनोपायद्वारेण स्वकायविचारणात्मीयसंबन्धलेशोऽपि मयि नास्ति । अतएव आगन्तुकस्कन्धक्लेशमृत्युमारादीनां शंका भयं च न विद्यते । तथा च आगमः—

आत्मा विशतीत्यादि[10] ।

तदिदानीं मम तदर्थविकल्पभावे महामुद्रासिद्धिवाञ्छा दूरं पलायिता च । तथा च आगमः—

नैव क्वचित्पुरा बद्धो ऽधुना मुक्ति र्न विद्यते ।
बन्धमुक्तिविकल्पो ऽयं [11]किंचिज्ज्ञानमलक्षणम्[11] ॥

[ अ ] अनुभवपदेन उक्तार्थं कथयति । अनुभवेत्यादि । आत्मानं संबोध्य वदति भो ताडक । अनुभवार्थं कथं वक्तुं शक्यते तस्मादनुभवं सहजमिति कृत्वा कथं वदसि[12] । उत भावनासंवृत्यनुरोधेन परं भण्यते न तु स्वरूपतः । तथा च आगमः—

10. H. आत्मविशतीत्यादि ; bdag ni hjug par byed 'आत्मा हि विशति' ।
11...11. It stands for न किंचिज्ज्ञानलक्षणं ; Cf. Tib. gaṅ de ye śes mtshan ñid min 'किंचिद् ज्ञानलक्षणं नास्ति' । 12. H. वहसि ; rjod par byed 'वदसि' ।

देशनीपद[13]योगेन बुद्धो अद्वयकल्पितः ।
परमाचित्त[14]योगेन न बुद्धो नापि अद्वयः ॥

तस्माच्चतुष्कोटिविनिर्मुक्तभावात् पुनस्तेन प्रकारेण तिष्ठामीति । तथा च आगमः—

न सन्नासन्नसद्[15] इत्यादि ॥

[२] द्वितीयपदेन तमेवार्थं प्रतिनिर्देशयति । जइसनीत्यादि । उत्पादकाले पविधर-नैरात्म्याभिष्वङ्गात् महासुखमयोत्पन्नो ऽहं महावज्रधरः । पुनरपि वज्रगुरुणा तस्मिन् नीतार्थे दृढीकृतो ऽस्मीति । तस्मात् भोः सिद्धाचार्य सहजं पृथक् इति मा कुरु । निःशंकं सिंहरूपेण जातिषु[16] भ्रम ॥

[३] तृतीयपदेन योगीन्द्रस्य निमित्तमाह । वाण्डेत्यादि । यथा पारावारे तरपतिस्तर-दानग्रहणाय पारेच्छूनां वासविमोक्षणे कपर्दिकान्वेषणमपि करोति तेषां वाण्डकुरुण्डादि बाधकविशेषं च पश्यतीति । बाह्यमातं स्वसंवेद्यलक्षणसंयुक्तं धर्मं कथं लोके वचनद्वारेण प्रतिपादयितव्यं । तथा वाक्प्रतीतिधर्माधिगमात् कृत्याद् विगुणनिमित्तं लोकेन निरूप्यते योगीन्द्रस्य । तथा च आगमः—

धूमेन ज्ञायते वह्निः इत्यादि ॥

[४] चतुर्थपदेनात्यन्तनिर्विकल्पतां प्रतिपादयति । भणइ इत्यादि । सिद्धाचार्यो हि ताडक एवं वदति । अस्मिन् धर्मे बालयोगिनामवकाशमात्रं नास्तीति । ये ऽपि परमार्थविदस् ते ऽपि यदि वदन्ति अस्माभिः धर्माधिगमं कृतं तदा तैरेव स्वग्रीवा संसारपाशेन बद्धा । तथा च आगमः—

[17]तिलतुषमात्रविपर्णं [ नापि ][17] इत्यादि ॥०॥३७॥

[ सप्तत्रिंशत्यां चर्यागीत्यां टीका ॥ ]

13. H. ०यद० ; chig ०पद० । 14. H. परमाचिन्त० ; bsam med mch.g la 'परम-अचित्त—' । 15. The complete verse, as quoted in *Advayavajrasamgraha* p. 19, runs—

न सन्नासन्न सदसन्न चाप्यनुभयोत्मकं ।
चतुष्कोटिविनिर्मुक्तं शून्यं माध्यमिका विदुः ॥

16. Tib. not clear, H. notes here जति the reading of Ms. 17..17. H. तिलतु सन तु विषर्णं ; tila dań sbun pa tsam gi lo mas kyań.

॥३८॥

[ राग भैरवी सरहपादानाम् ]

काअ [2]णावड़ि खाण्टि[2] मण केड़ुआल[3] ।
सद्गुरु वअणे धर पतवाल[3] ॥ [१] ॥

चीअ थिर करि [4]धरहु रे नाइ[4] ।
आन[5] उपाये पार ण जाइ ॥ ध्रुवपद ॥

नौवाही नौका टाणअ[6] गुणे[7] ।
[8]मेलि मेलि[8] सहजे जाउ ण आणेँ ॥ [२] ध्रु ॥

[9]वाटत भअ खाण्ट वि[9] बलआ ।
भव उलोलेँ सब[10] वि बोलिआ ॥ [३] ध्रु ॥

कूल लइ खरे सोन्तेँ उजाअ ।
सरह भणइ [11]गअणें समाअ[11] ॥ [४] ध्रु ॥

1. Tib. transcription भे-र-वी । 2..2. gru yi dum bu 'नौ-खण्ड' । 3. The words केड़ुआल and पतवाल seem the same as डाँड़ ∠ दंड and पतवार ∠ पत्रवाल in current Hindi which have been rendered in Tib. by one word skya ba [ = gru-skya ] 'नौदण्ड, our' but in the Tib. commentary there is the word *mñan pa* 'boat-man' for पतवाल । The words केड़ुआल and पतवाल are not to be taken identical in the meaning to avoid *Punarukta daṣa* here. The word पतवाल, therefore to be taken as पत्रपाल [ =यानपाल i. e. नौयानपाल 'boat-man' ] here. For पत्र 'car' vehicle' Cf. इत्याप्तवचनाद् रामो विनेष्यन् वर्णविक्रियाम् । दिशः पपात पत्रेण वेगनिष्कम्पकेतुना ॥ *Raghuvamsa of Kalidāsa* 15. 48 ; पत्रं वाहनपक्षयोः । *Amarakośa*. The *Sanskrit* commentary takes केड़ुआल as केनिपात 'helm'.

कायो नौका मनः केनिपातः ।
सद्गुरुवचनं गृहीत्वा पत्रवालं पत्रपालं वा ॥१॥

चित्तं स्थिरीकृत्य धारयत अरे नाविकाः [ धारय अरे नावं वा ] ।
अन्येन उपायेन पारं न याति ॥०॥

नाविको नौकां कर्षति गुणेन ।
मिलित्वा मिलित्वा सहजे गच्छ न अन्येन ॥२॥

वर्त्मनि भयं खण्डकाः [ बलद्दस्य्वादयः ] ।
भवोल्लोलेन सर्वमपि मज्जितं ॥३॥

कूलं गृहीत्वा खरस्रोतसि उद्याति ।
सरहो वदति गगनं प्रमाति विशति वा ॥४॥

4...4. H. धहुरे नाही ; bzuṅ gis gru ṅa rnams 'धारयत नाविकाः' । 5. H. अन ; gshan 'अन्य, *apabhraṃśa* आन । 6. H. टागुअ ; the commentary आकर्षयति indicates that the reading is टाणअ । 7. गुण 'rope ; virtue'. Tib. renders only the second meaning by the word *yon tan.* 8...8. H. मेलि मेल ; 'tshogs shiṅ 'tshgs pas 'meeting and meating'. 9..9. H. बाट अभआ खान्टा ; lam ni 'gog pa'i 'jigs pa 'वर्त्मनि रोधकभयं ; the reading ought to be corrected as वाटत भय खाण्ट ; खाण्ट ( Mid. Bengali खाँट and खण्ड ) ∠ खण्डक । 10. H. षअ ; thams cad 'सर्वं' । 11..11. H. गणे पमाएँ ; nam kha'i tiṅ ṅe 'dsin 'गगमसमाधि, शून्यसमापत्ति' । The reading गणे पमाएँ therefore seems as गगनप्रमाण 'a state of meditation'. The commentary explains it as गगनेति कैवल्यचन्द्रदीपे ऽन्तर्भवति । This indicates that the reading is गअणेँ समाअ ।

[१] मैत्रीमयः सरहपादस्तमेवार्थं कायनौकाव्याजेन प्रतिपादयति । काअ नावडी खाण्टी[12] इत्यादि । आधाराधेयसंबन्धेन कायं नौकां परिकल्प्य मनोविज्ञानं केनिपातं[13] च । सद्गुरुवचनं पतवालं गृहीत्वा ॥

[ध्रु ] वज्रजलसंयोगभवजलधिमध्ये पंचज्ञानात्मकं विलक्षणशोधितसंवृतिबोधिचित्तं स्थिरीकृत्य कायनौरक्षां कुरु भो सरहपाद । भवसमुद्रं तर्तुं नान्योपायो विद्यते । तथा च दउड़ीपादानां—

एते पंच यंति मोहतटिनीपारम् इत्यादि ।

[२] द्वितीयपदेन मार्गस्यानुशंसामाह । नौवाही[14] इत्यादि । यथा बाह्ये नौकां वाहयति कर्णधारः गुणेन आकर्षयति च तद्वदियं नौ नं भवति । भो योगिन् वज्रगुरौ सहजानन्दोपायं गृहीत्वा नौपरित्यागं कुरु । सद्यः येन महासुखद्वीपं गच्छ ॥

[३] तृतीयपदेन मारकर्माधिष्ठानमाह । वाटत इत्यादि । खानपानविषयासक्तित्वेन साधको यदा मार्गभ्रष्टो भवति अवधूतीं गत्वा जहातीति । खाण्टमिति । तदा चन्द्रसूर्यौ द्वौ बलवन्तौ भवतः तेन हेतुना भवसमुद्रविषयोल्लोलनेन नैरात्म्यधर्मै[15] सर्वप्रकारेण बोलितमिति ॥

[४] चतुर्थपदेन अवधूतीमार्गस्यानुशंसामाह । [16]कुल लइ इत्यादि । कुमार्गचन्द्रादिकं यस्मिन्[17] अवधूत्यां लयं गच्छति सा प्रकृतिपरिशुद्धावधूतिका कुलशब्देन बोद्धव्या । लइ[18] इति तां गृहीत्वा खरसोन्तेमिति[19] बहलसुखरागस्रोतावर्तेन परमार्थविदां यो बोधिचित्तवज्रः स ऊर्ध्वं गच्छति । गगनेति वैमल्यचक्रद्वीपे अन्तर्भवति ॥०॥ ३८॥

[ अष्टत्रिंशयां चर्यागीत्यां टीका ॥ ]

12. H. खण्टी॰ stands for खाण्ट in the *Caryā*. 13. H. केल्पित; gru'i skya ba 'oar'. 14. H. नौवाश्च stands for नौवाही in the *Caryā*. 15. The word ॰धर्मे has been declined hare as if it is धर्मन् like कर्मन् । 16…16. H. कुलल । 17. यस्मिन् stands for यस्यां । 18. H. लय stands for लइ in the *Caryā*. 19. H. ॰मेति ।

॥३९॥

[ राग मालशी[1] सरहपादानाम् । ]

[2]सुइणेँ ह[त्थ्]अ बिदारअ रे निअ मन तोहोरेँ दोसे[2] ।
गुरुवअण विहारे रे थाकिब तइ घुण्ड कइसे ॥ [१] ॥

अकट [3]हूँ-भव-गअणा[3] ।
[4]वङ्गे जाया निलेसि[4] प[ा]रे भागेल तोहोर विणाणा ॥ ध्रुवपद ॥

अदभुअ[6] भवमोह रे[7] दिसइ पर अप्पणा[8] ।
ए जग जलबिम्ब[ा]कारे सहजे सुण अपणा ॥ [२] ध्रु ॥

अमिआ[9] अच्छन्तेँ विस गिलेसि रे चिअ परवस[10] अपा ।
[11]घरेँ-परेँ[11] का बुझ्झिले मारि[12] खाइब मइ दुठ कुण्डबाँ ॥ [३] ध्रु ॥

सरह भणन्ति वर सुण गोहाली कि मो दुठ बलन्दे ।
एकेले जग नाशिअ रे विहरहु[13] सुच्छन्दे[14] ॥ [४] ध्रु ॥

1. मालशी ∠ मालश्री । 2..2. H. सुइणा ह अविदार अरे निअ मन तोहोरेँ दोसे; ston ñid lag pas hol cig kye khyod kyi raṅ gi yid kyi skyon 'शून्यबाहुना श्लथीकुरु (=शिथिलय) अरे तवात्मनो मनसो दोषान्' suggests correct reading as सुइणहत्थेँ विदारअ रे निअ मन तोहोरेँ दोसे । The word सुइण ∠ स्वप्न is a *lākṣaṇika* usage for शून्य । Cf. सुन बाह तथता पहारी *Caryā* 36 *pāda* 1 a and स्वपणे मइ देखिल तिहुअण सुण ib. *Pāda* 3a and their commentary. 3..3. H. हूँ भवइ अणा ; hum skyes namkha 'हुं-भव-गगनं । 4...4. kyog por 'gro ba bslaṅ gyis la 'वक्रगतिं व्यमिश्रयः'। 5. pha rol 'पार'। 6. H. अदअभुअ ; ṅo mtshar 'अद्भुत'। 7. H. रे (not separated from मोहा); kyema 'अरे, रे, हे, भोः'। 8. H. अप्पणा ; bdag 'आत्मा'।

स्वप्नः शून्यता वा हस्तः तेन विदारय अरे निजमनोदोषान् ।
गुरुवचनविहारे अरे स्थास्यति त्वं घूर्णत् कथं ॥१॥

आश्चर्यं हुंभवगगनं ।
वंगे जाया गृहीता परं पलायितं तव विज्ञानं ॥०॥

अद्भुतो भवमोहः अरे दृश्यते परः आत्मा ।
गृहं परं किं अबुध्यं हत्वा खादयिष्यामि अहं दुष्टान् कुटुम्बिकान् ॥३॥

सरहो वदति वरं शून्यो गोत्रजः किं मे दुष्टबलीवर्देन ।
एकाकी जगत् नाशयित्वा अरे विहरामि स्वच्छन्देन ॥४॥

[१] सिद्धाचार्यो हि सरहपादस्तमेवार्थं भावस्वरूपावगमात् लोकार्थाय वदति । सुइणेमित्यादि । भो निजमन चित्तराज तव अविद्या[दि][15]दोषात् [ असुखे ][16] सद्रूपावगमकत्वात् स्वप्नेऽपि द्रव्याभिलाषात् [ यथा सर्वं पर्वतं हस्तालंबितं प्रबोधे कथंचित् तत्कथयेवेति । तत्राधुना बुद्धपुण्यानुभावेनस्व- ][17] सद्गुरुवचनेन्दुरश्मयस्त्रैलोक्ये स्फारिताः । अतः कुत्र स्थाने त्वया स्थातव्यं भो चित्तराज ॥

[ अ॒ ] अ॒पदेन तमेवार्थं द्रढयति । अकटेत्यादि । आकटं आश्चर्यं । गुरुपादपद्म-प्रसादात् लीलया मया ऽवगतोऽसि हुंकारबीजोद्भवो[18] भो[ः] चित्तराज । गअणेति प्रभास्वरे प्रविष्टोऽसि इदानीं अविद्यादोषविनाशकौकृत्यं भग्नं तव ।

9. H. अमिया ; यश्रुति before आ is for the purpose of easy pronocenciation ( मुखसुखार्थ ) । 10. H. पसर वास gshan dbań 'परवश' । 11..11. Cf. Hindi idion घर-बाहर ; khym na btuń ba 'गृहे पानं' [?] । 12. H. मरे । 13. H. विरहुँ ; spyod 'विहरामि' । 14. इच्छन्दें ; rań 'dod 'स्वच्छन्द' । 15. rig pa la sogs pa'i 'अविद्यादि॰' । 16. bde ba ma yin pa'i. 17. dper na la thams:cad lag tu rnam par brkyań ba bshin dań gñid sad pa bshin du de rnams kyi slar yań gań ji lta smra shes so, de la da ni sańs rgyas kyi bsod rnams kyi mthas bdag gi. 18. H. ॰द्भव ; it is related with the verb अवगतोऽसि not with the vocative भो[ः] चित्तराज ।

[२] द्वितीयपदेन अधिमात्रसत्त्वस्यानुशंसामाह । अद्भुअ[19] इत्यादि । मत्रसत्त्वस्य मोहोऽयमद्भुतः । [20]यस्माद् आत्मस्वभावानवगमात् स्वपरपार(त्वार) भेदविभागं[20] स पश्यति । अत एव साहंकारे मनसि परमार्थचित्तस्योदयस्तव नास्तीति । तथा च आगमः—

साहंकारे मनसि विशमं याति जन्मप्रबन्धो
नाहंकारश्चलति हृदयादात्मदृष्टौ तु सत्यां ।
नान्यः शास्ता जगति जयिनो नास्ति नैरात्म्यवादी
नान्यस्तस्मादुपशमविधेस्तन्मतादस्ति मार्गः ॥

तत्त्वविदां प्रतीरे नीरेन्द्रादिवद् द्वादशदृष्टान्तद्वारेण[21] [22]शून्यतायाः सर्वप्रमाणानुपपन्ना[22] सिद्धिर्भवतीति ॥

[३] तृतीयपदेन चतुर्थानन्दमाहात्म्य[23]माह । अमिअमित्यादि । सहजानन्दस्थिते सति रूपादिविषयविषं[24] यथा[25] अभ्यवहरसि भो [:] कर्मवश्य[26] चित्त विचारक । गृहमिति गृहमिति स्वकं कायं पानकमिति । रागद्वेषमोहादिकं समूहं तव निजगृहिणी["] ज्ञानमुद्रानैरात्मा समालिङ्ग्य तस्य भक्षणं निःस्वभावीकरणं मया कर्तव्यं । तथा च सरहपादाः—

धरणियें परविष खज्जइ[27] इत्यादि ॥[28]

[४] चतुर्थपदेन स्वच्छन्दचर्यामाह । सरहपादसिद्धाचार्यो हि वदति । सरह भण इत्यादि । दुष्टवलदमिति । दुष्टविषयं वलं ददाति इति दुष्टवलद[:] चित्तराजो बोद्धव्यः । एकेन

19. H. अदअ ; ṅo mtshar 'अद्भुत' । 20...20. gaṅ las raṅ gi ṅo bo mi śes pa'i phyir raṅ daṅ gshan daṅ pha rol tu 'byed pa'i rnam par dbye ba ; H. यस्मादात्मस्वरपरापरभेदविभागं । 21. H. adds here भवेत् which is not found in Tib. 22...22. H. सर्वशून्यप्रमाणो[प]पन्ना ; thams cad stoṅ ba'i chad ma yis skye ba med la. 23. H. omits माहात्म्य ; bdg ñi che ba 'माहात्म्य' । 24. gzugs la sogs pa yul gyi dug 'रूपादिविषयविष' ; H. रूपादिविष[य]विप(1)क[न] । 25. ji ltar 'यथा' ; H. प्रसह्य[ ]व । 26. las kyi dbaṅ 'कर्मवश्य' ; H. कर्मेव वश्य० । 27. Cf. *Dohākoṣa of Sarahapāda* verse 84. 28. H. has here two more lines not found in Tib.—

घरवितो खज्जइ सज्ञि रज्जइ णठा रामा वेराअणी ।
अकुल लद्धी चित्ता भट्टी जोइणी सो पतिदास ।

तेन दुष्टेन त्रैलोक्यं नाशितं। तेन दुष्टवलन्देन मया किं कर्तव्यं। गो इति इन्द्रियं। तस्य सालम्बनं स्वकायं तं शून्यप्रभास्वररूपं कृत्वा गुरुवचनप्रसादात् स्वच्छन्देन त्रिजगति विहरणं करोमि— इति। तथा च शान्तिदेवपादाः—

स्वच्छन्दचार्यनिलय इत्यादि[29] ॥०॥३९॥

[ एकोनचत्वारिंशं चर्यागीत्यां टीका ॥ ]

29. *Bodhicaryāvatāra, pariccheda* 8 verse 88.

॥४०॥

[ राग मालसी गवुड़ा[1] काह्न पादानाम् । ]

जो मणगोअर[2] आला-जाला[3] ।
आगमपोथी इष्टा-माला[4] ॥[5] [१] ॥

भण कइसे सहज बोलवा जाअ[6] ।
काअ वाक् चिअ जसु ण समाअ ॥ ध्रुवपद ॥

आले गुरु उपसइ सीस ।
वाक्पथातीत काहिब कीस ॥ [२] ध्रु ॥

जेत[7] इ[8] बोली तेत[9] वि टाल[10] ।
[11]गुरु बोब से[11] सीसा काल[12] ॥ [३] ध्रु ॥

भणइ काह्न जिण रअण वि कइसा[13] ।
[14]काले बोब[14] संबोहिअ जइसा ॥ [४] ध्रु ॥

1. Tib. transcription गो-डा is the latter form of गवुड़ा । 2. H. ०गएर । 3. mig 'phrul dra 'इन्द्रजाल' ; Cf. येषां श्रुतम् आलजालाय *Kādambarī of Bāṇa Bhatta* ( P. L. Vaidya's edition ) p. 288 आलजालानि चिन्तयन्ती Tib. 310 ; Siddhacandra explains—आलजालानि स्वप्नान्तर्गतप्रायाणि । 4. brdsun kyi phreṅ ba 'मिथ्या-माला' ; इष्टामाला ∠ इष्टकामाला 'a pile of bricks'. 5. The line means—Cannonical works are nothing but a pile of bricks i.e. the burdon on the heads. 6. H. जाय । 7. जेतइ ∠ *Prākrit* जेत्तिअ ∠ यावत् । 8. इ Prākrit वि or अवि < अपि । 9. तेत ∠ Prākrit तेत्तिअ ∠ तावत् । 10. Cf. Hindi idiom टाल-मटोल । 11...11. H. गुरुबोधसे ; bla ma'i thobs kyis 'गुरोर् उपायेन' ; the commentary explains

यत् मनोगोचरं ( तत् ) इन्द्रजालं ।
आगमपुस्तकानि इष्टका माला ॥१॥

यद् कथं सहजं वक्तुं शक्यते ।
कायवाक्चित्तं यस्मिन् न प्रविशति ॥०॥

अलं [ =अलीकं ] गुरुरुपदिशति शिष्यं ।
वाक्पथातीतं कथयितव्यं कथं ॥२॥

यावद् अपि उक्तं तावद् अपि व्याजः ।
गुरुर्मूकः स शिष्यः बधिरः ॥३॥

वदति कृष्णः जिनरत्नमपि कीदृशं ।
बधिरेण मूकः संबोधितो यथा ॥४॥

[१] सहजानन्दमुदितः कृष्णाचार्यः प्रतिपादयति । जो मण इत्यादि । मनइन्द्रियाश्वस्य[15] गोचरो यः सकलविकल्पजालः । आगम मन्त्रशास्त्रादिज्ञानं वा तत्सर्वं च । तथा च—

आगमः वेअ पुराणें[16] इत्यादि ॥

[ ध्रु ] ध्रुवपदेन सहजदौर्लभ्यं प्रतिपादयति । अतएव वेदः[17] कथं सहजमनुत्तरज्ञानं वक्तुं शक्यते । पृथग्जनानां कायवाक्चित्तं यस्मिन् सहजे नान्तर्भवति । तथा च तिल्लोपादः—

सअ संवेअण तत्तफल तिलोपाए भणन्ति ।
जो मणगोचर गोइआ[18] सो परमथे ण होन्ति ॥[19]

---

as वज्रगुरुः वचनदरिद्रत्वेन युक्तः । बाब=मूक, Mod Bengali बोबा ; Hindi बौरा । 12. काल=बधिर, Mod. Bengali काला ; 'khrul par bya 'misled. भ्रान्त' । 13. H. विकसइ सा ; ji ltar 'कीदृश, Apabhraṃśa कइस, Mod. Hindi कैसा । 14...14. Cf. the commentary बधिरः मूकस्य संबोधनं ; lkug pas lon par 'मूकेन अन्धः' । 15. The word अश्व is not found in Tib. 16. *Kāṇhapāda* : *Dohākoṣa* verse 2. 17. The sentence requires वेदेन । 18. गोइअ ∠ Prakrit गोविअ ∠ गोपित । 19. *Tillopāda* : *Dohakaṣa* verse 9.

[२] द्वितीयपदेन तत्त्वस्वरूपमाह । आलेमित्यादि[20] । अलं निष्फलं गुरुः शिष्या-योपदेशं ददाति । यो ऽपि सहजः स कथावेद्यो न भवति । तेन गुरुणा किं कृत्वा वक्तव्यमिति । तथा च सरहपादाः—

णउ तं वाए गुरु कहइ[21] ॥

[३] तृतीयपदेन तमेवार्थं दृढयति । जेतइ[21] इत्यादि । [22]तस्माद् भवतीति[22][वचन][23] मात्रगत्या यद्यद् भण्यते तत् सर्वं टालनमसद्रूपं । यो ऽपि वज्रगुरुः सोऽप्यस्मिन् धर्मे वचन-दरिद्रत्वेन युक्तः । तस्य शिष्येणाप्यवचस्त्वेन किंचिन्न श्रुतं । अतएव सोऽपि च बधिरस्तस्मिन् गंभीरधर्मे मतिं प्रतिपादयति ॥

[४] भणइ इत्यादि । कृष्णाचार्यो हि वदति । कीदृशं जिनरत्नं । रतिं अनन्तसुखं तनोतीति रत्नं चतुर्थानन्दं बोद्धव्यं । यथा बधिरः संकेतादिना मूकस्य संबोधनं करोति तद्वद्दूरे सद्गुरुः शिष्ये रतिं स्वप्रभावेण महासुखं तनोति । तथा च दउड़ीपादाः—

अदूरे दूरे वेत्यादि ॥०॥४०॥

[ चत्वारिंशत्तम्यां चर्यागत्यां टीका ॥ ]

20. The *Caryātext* reads आले for आलें । 22. *Sarahapādīya Dohā* p. 13 ; verse 9 ; वाए = वाक्येन । 21. H. तेजइ । 22...22. H. तस्माद् भगवतीति ; de las byuṅ ba'i 'तस्माद् भवतीति' । 23. tshig 'वचन' ।

॥४१॥

[ राग कह्न गुञ्जरी[1] भुसुकुपादानाम् । ]

आइए अणुअना ए जगरे [2]भान्तिए सो[2] पड़िहाइ ।
राजसाप देखि जो चमकिइ [3]साचे किं तँ[3] बोड़ो[4] खाइ ॥ [१] ॥

अकट जोइआ रे मा कर हाथ लोहा[5] ।
आइस सभावेँ जइ जग बुझसि तुटइ[6] वासना[7] तोरा ॥ ध्रुवपद ॥

मरुमरीचि[8] गन्ध[ब]नअरी दापनपड़िबिम्बु[8] जइसा ।
वातावत्तेँ सो दिढ़[9] भइआ अपेँ पाथर जइसा ॥२॥

वान्धि[10]सुआ जिम केलि करइ खेलइ बहुविह खेला[11] ।
वालुआ तेलेँ ससरसिंगे आकाश [ ँ ] फूलिला ॥३॥

राउतु भणइ कट भुसुकु भणइ कट सअला अइस सहाव ।
जइ तो मूढा अच्छसि भान्ती पुच्छतु सद्गुरु पाव ॥४॥

1. Tib. transcription गु-ज-री । 2...2. H. भान्ति एँसो ; 'khrul par śes भ्रान्तिः प्रतीयते' । 3..3. H. षारे किं तं ; Cf. 'रज्जुसर्पेण किं सत्येन' (the commentary). 4. बोड़ो ∠ बोड़् 'a snake of the viper class' ; Mod. Bengal बोड़ा । 5. लोहा 'red' ; Cf. Sanskrit word लोहित and लोहिनी ; or लोहा 'having salt', Cf. *Avadhī* लोना ∠ लावण=having charm. सुमन समेत बाम कर दोना । सावँर कुअँर सखी सुठि लोना ॥ *Rāmacaritamānasa of Tulasidāsa*. Tib. renders it as sge bar [ ? sgeg par ; sgeg ba= लावण्य, grace ] ; the commentary explains मा कर लोहा as हस्तामर्षं मा कुरु ; Tib. lag pas sbrel bar bya mi dgos te 'हस्तबन्धनं मा कुरु' । 6. H. तुट ; za 'eaten up'. 7. bag chags 'वासना, desire' ; H. वासणा । 8..8. H.

आदितः अनुत्पन्नमिदं जगत् अरे भ्रान्त्या तत् प्रतिभाति।
रज्जुसर्पं दृष्ट्वा यः संभ्रान्तः सत्यः किं तं सर्पः खादति ॥१॥

आश्चर्यं योगिन् अरे मा कुरु हस्तं लोहनं ( =लोहितं ) लावणं वा।
ईदृशेन स्वभावेन यदि जगत् बुध्यसि त्रुट्यति वासना तव ॥०॥

मरुमरीचिका गन्धर्वनगरी दर्पणप्रतिबिम्बं यथा।
वातावर्तेन स दृढीभूतः अपां प्रस्तरो यथा ॥२॥

बन्ध्यासुतो यथा क्रीडां करोति खेलति बहुविधाः खेलाः।
वालुकातैलेन शशकस्य शृंगेण आकाशो फुल्लिते ॥३॥

राजपुत्रो वदति अहो भुसुकु वदत्यहो सकलं ईदृशस्वभावं।
यदि त्वं मूढो ऽसि भ्रान्तः पृच्छ सद्गुरुपादं ॥४॥

[१] सहजानन्दमुदितो हि भुसुकुपादस्तमेवार्थं प्रतिपादयति। आइ इत्यादि। आदौ अनुत्पन्नभावत्वेन जगदिदं स्वयं परमार्थज्ञैरवगतं तेन तेष्वन्ययाभावं न गच्छति। तथा आगमः—

अकारो मुखं सर्वधर्माणामाद्यनुत्पन्नत्वात् [इति]।

अथ भ्रांत्याविद्यातिमिरलोचनानालपीतादिरूपेण भो बालयोगिन् भावं त्वां प्रति भासते। तथा[12] आचार्य निद्ताकाः[13]—

केशोण्डुकं यथाकारो दृश्यते तैमिरकैर्जनैः।
तथालोकादिदोषेण भावो बालैर्विकल्प्यते ॥

अथ रज्जौ सर्पाभिज्ञानं कृत्वा संत्रासितो यः। सोऽपि तेन रज्जुसर्पेण किं सत्येन खादितः ॥

---

गन्धनअरीदापतिपडिबिम्बु ; dri za'i groṅ chu zla gzugs brñan 'गन्धर्वनगरी जलचन्द्रप्रतिबिम्ब'। 9. H दिट ; brtan pa 'दृढ'। 10. H. बाधि। 11. H. खेळा। 12. H. अथ ; de bshin du 'तथा'। 13. Tib. transcription नि·द्·ता-का।

[ १ ] प्रथमपदेन मार्गस्यानुसंधानमाह। अकटेत्यादि। आकट आश्चर्यं भो बालयोगिन् अत्र हस्तामर्षं मा कुरु। ईदृशस्वभावेन यदि जगत्स्वरूपावगमं करोषि तदा अनादिभवविकल्पवासनादोषसंग्रहं पलायते तव॥

[२] द्वितीयपदेन तमेवार्थं संवृति[14] दृष्टान्तेन स्पष्टयति। मरुमरीचीत्यादि। मृगतृष्णागन्धर्वनगरदर्शनादि प्रतिभासमात्रं योगिवरेण दृश्यते। तथा च आगमः—

यथा माया यथा स्वप्नं तथा हि अन्तराभवं इत्यादि।

एतत्सर्वमविद्यावासनादोषेण मिथ्या बालैर्विकल्प्यते। यथा वातावर्तेन नीरमपि प्रस्तरं भूतं तद्वत् भावग्रामो योगीन्द्रेण बोद्धव्यः। तथा च आगमः—

शून्यतैव भवेद्भावो वासनावासिता सती।
वातावर्त्तौ दृढीभूता अत एव घनोपलाः॥

[३] तृतीयपदेनात्यन्ताभावं सूचयति। बान्धीत्यादि। बन्ध्या भगवती नैरात्मा तस्याः सुतः परमार्थसत्यं वालुकातैलोपमं शशशृंगोपमं च। एतेनानुत्पन्नस्वभावो हि तस्य सूचितः। स एव उत्पन्नो हि परमार्थसत्यमहासुखपंचज्ञानात्मकः जगति नानाप्रकारेण क्रीडारसमनुभवतीति। तथा च सूतके—

पंचबुद्ध्यात्मकसर्वजगो[15] ऽयमित्यादि॥

[४] चतुर्थपदेन भावपरिशुद्धिमाह। भुसुक इत्यादि। भुसुकुपादो हि वदंति भावानामेष रूपो हि मया कथितः। भो बालयोगिन् यदि तव भ्रान्तिरस्ति तदा सद्गुरुचरणाराधनं कुरु॥०॥४१॥

[ एकचत्वारिंशत्तम्यां चर्यागीत्यां टीका॥ ]

14. H. संवृत्ति; kun rdsob 'संवृति'। 15. जगः stands for जगत्।

॥४२॥

[ राग कामोद[1] काह्नपादानाम् । ]

चिअ सहजे शून संपुण्णा ।
कान्धवियोएँ मा होहि विसण्णा ॥ [१] ॥

भण कइसे काह्न नाहि ।
फरइ अनुदिनँ[2] तेलोए पमाइ ॥ ध्रुवपद ॥

मूढा दिठ[3] नाठ देखि काअर ।
भाङ्ग तरङ्ग कि सोषइ साअर ॥ [२] ध्रु ॥

मूढा अच्छन्ते लोअ न पेखइ ।
दुध माझे लड़[4] ण च्छन्ते[5] देखइ ॥ [३] ध्रु ॥

भव जाइ ण आवइ ण एथु[6] कोइ ।
अइस[6] भावे विलसइ काह्निल जोइ ॥ [४] ध्रु ॥[7]

1. 'dod pa sbyen pa 'कामद' । 2. H. अनुदिनं । 3. brtan 'दृढ' ।
4. mar 'नवनीत' । 5. H. पच्छंतें । 6. H. एसु । 7. H. आइस ।
The Tib. translation of the *Carya* is not literal.

चित्तं सहजेन शून्यसंपूर्णं ।
स्कन्धवियोगेन मा भव विषण्णः ॥१॥

वद कथं कृष्णो नास्ति ।
स्फुरति अनुदिनं त्रैलोक्ये प्रमाति ॥०॥

मूढो दृष्टनष्टं दृष्ट्वा कातरः ।
भग्नस्तरंगः किं शोषयति सागरं ॥२॥

मूढः सद् लोकं न पश्यति ।
दुग्धमध्ये नवनीतं न सत् दृश्यते ॥३॥

भवे याति न आगच्छति न अत्र कोऽपि ।
ईदृशभावे विलसति कृष्णो योगी ॥४॥

[१] ज्ञानामृतपरितुष्टो हि कृष्णाचार्यपादस्तमेवार्थं प्रतिपादयति । चित्त इत्यादि । सहजेनेत्यादि । प्रकृतिस्वरूपेण सर्वदैव षोडशीशून्यतया[8] संपूर्णो ऽयं मम चित्तराजः । अतएव स्कन्धवियोगेनेति । भो जना मम स्कन्धाभावात् विषादं मा कुरु । तथा च हेवज्रे—

स्कन्धाभावे परमिति ॥

[ध्रु] ध्रुवपदेन स्वरूपं प्रतिपादयति । भो बालयोगिन् वद कथं कृष्णाचार्यो हि न विद्यते । त्रैलोक्यस्वरूपं ९तस्य भाव्यं९ । अनुदिनं स्फुरति परमार्थजलधौ क्रीडतीत्यर्थः । तथा च आगमः—

यथा नदीजलात् स्वच्छात् मीन उत्पतति द्रुतं ।
सर्वशून्यात्तथा स्वच्छात् मायाजालमुदीर्यते ॥

8. H. षोडशीशून्यतायां ; stoṅ pa ñid bcu drug gis 'षोडशीशून्यतया' ।
९..९. H. त [ ं ] [भि] भाव्यं ; de'i bsgom par bya'o 'तस्य भाव्यं' ।

[२] द्वितीयपदेन दृष्टान्तद्वारेण तमेवार्थं विस्पष्टयति। मूढा इत्यादि। नीलपीतादि-वर्णसंस्थानो हि यो भावस्तस्य भंगं दृष्ट्वा मूर्खाः किमर्थं कातरा भवन्ति। किमम्भोधेर्भङ्गतरंगः तं सागरं शोषयतीति ॥

[३] तृतीयपदेन [ तदेव द्रढयति। मूढा इति। यथा मूढो विद्यमानमपि दुग्धमध्ये नवनीतं न पश्यति तथा त्रैलोक्यं दृश्यमानमपि न पश्यति ॥ ][10]

[४] [ चतुर्थपदेन ][11] परिनिष्पन्नतामाह। भव जाइ ण इत्यादि। सद्गुरुपंकजरजः न[12] करोतीत्यर्थः। एतद्भवस्वभावपरिज्ञानेन कृष्णाचार्यपादो भवेऽप्यत्र विलसति क्रीडतीति ॥०॥४२॥

[ द्वाचत्वारिंशत्तम्यां चर्यागीत्यां टीका ॥ ]

10. de ñid brtan par byed do. rmoṅs pa shes pa ni de bshin du blun pos yod bshin pa yaṅ 'o m'i naṅ na mar mi mthoṅ ba'o. de bshin du 'jig rten gsum mthoṅ bshin pa yaṅ mi mthon ba'o.
11. rkan pa bshi pas. 12. न is not rendered in Tib.

॥४३॥

[ राग बंगाल भुसुकुपादानाम् । ]

सहज महातरु फरिअ[1] ए तेलोए ।
खसमसभावे रे [2]वाणत मुका कोए[2] ॥ [१] ॥

........................ ।
........................ ॥ ध्रुवपद ॥[3]

जिम जले पाणिआ टलिआ भेउ[4] न जाअ ।
तिम मण-रअण[5] समरसे गअण समाअ ॥ [२] ध्रु ॥

जासु नाहि अप्पा तासु परेला काहि ।[6]
आइ अणुअणा रे जाम मरण भव[7] नाहिं ॥ [३] ध्रु ॥

भुसुकु भणइ कट[8] राउतु[9] भणइ[10] कट सअला एह सहाव ।
जाइ न आवइ[11] रे ण तहिं[12] भावाभाव ॥ [४] ध्रु ॥

1. 'phro 'स्फुरित'; H. फरिअए to be read as फरिअ ए; ए here is to be taken as a *vākyālangkāra* or as the pronoun एतत् or an *āmantraṇa*.
2...2. H. वाणतो का कोएँ; bciṅs nas grol ba gaṅ 'बन्धनात् मुक्तः कः=वाणत मुका को[ए]'; The word वाण is to be compared with *pāli* वान and वन 'lust' and is to be derived from the root वन् 'win'. Cf. वनं छिन्दथ मा रुक्खं वनतो जायती भयं । छेत्वा वनं वनथं च निब्बना होथ भिक्खवो ॥ *Dhammapada* 283.
3. The commentary after the first *pada* says: पदस्योत्तरपदेन ध्रुवपदं बोद्धव्यं=Tib. chig phyi ma'i rkaṅ pas dhu'i rkaṅpar rig par bya'o.

सहजमहातरुः स्फुरितः भोः त्रैलोक्ये एतत् त्रैलोक्ये वा
असमस्वभावेन अरे धानतः मुक्तः कोऽपि ( =कश्चित् ) ॥१॥

.......................।
.......................॥०॥

यथा जले पानीयं पतित्वा भेदं न याति ।
तथा मनोरत्नं समरसे गगने विशति ॥२॥

यस्य नास्ति आत्मा तस्य परः क्व ।
आद्यनुत्पन्नो ऽरे जन्ममरणभवो नास्ति ॥३॥

भुसुकु वंदति कृतं ( =अलं ) राजपुत्रो वदति कृतं (=अलं) सर्वमेतत्स्वभावं
याति न आगच्छति अरे न तत्र भावाभावौ ॥४॥

This indicates that *dhruvapada* has been lost both in *Sanskrit* as well as Tibetan. 4. H. भेड; dbye bar 'भेदम्' ( dbyed ba 'भेद' )। 5. H. मरण अमणा; yid kyi rin chen po 'मनोरत्न = Apabhraṃśa मण-रअण'। 6. H. जत्पुणा हि अप्पाता स्वपरेला काहि; gaṅ la bdag ñid med pa de la gshan dag gaṅ 'यत्र आत्मैव नास्ति तत्र परः कः'। काहि is the same as कहि or कहिं in *prākrit* 'क्व, कुत्र' to be derived from कस्मिन्। 7. Tib. *srid pa* is an equivalent for *Sanskrit* भव, भुवन and भू from the root भू। 8. Tib ṅo mtshar 'आश्चर्य' stands here for the original कट। The word कट, to be derived from the Sanskrit word कृत (=अलम्), has been used here as a *vākyālaṃkāra*. 9-10. are not translated in Tib. 11. H. आवयि। 12. H. तहि।

[१] सहजमुदितो हि भुसुकुपादस्तमेवार्थं प्रकटयति। सहज इत्यादि। गुरुचरणरेणुप्रसंगेन पविपद्मसंयोगसुखाकारबीजं गृहीत्वा त्रैलोक्यं व्याप्य योगीन्द्रस्य सहजचित्तं स्फुरितं। एतस्य खसमोपमसुखस्वभावेन त्रैलोक्ये [13] न कोऽपि बन्धनमुक्त इति[13]। तथा च द्विकल्पे—

व्याप्यव्यापकरूपेण सुखेन व्यापितं जगत् ॥

[ध्रु] पदस्योत्तरपदेन ध्रुवपदं बोद्धव्यं ॥[14]

[२] द्वितीयपदेन दृष्टान्तोपमां करोति। जिम जलेत्यादि। यथा बाह्यनीरान्तरपतनभेदो न ज्ञायते बुधैः। तथा मनो[15] बोधिचित्त [चित्त]रत्न[16] योगीन्द्रसमरसीभूतं गगनेति प्रभास्वरे विषति[17] तत्र तस्य ज्ञानोपलंभो न स्यादिति। तथा च आगमः—

यथा जले जलं न्यस्तं ज्ञानचक्रं तथा स्थितमिति ॥

[३] तृतीयपदेन भावस्वरूपमाह। जासु नाहीत्यादि। यस्य योगीन्द्रस्य आत्मात्मीयसंबंधो न स्यात् तस्य परसंबंधः [18]सुदूरतर एव[18]। यस्मादनुत्पन्ना ये भावाः तेषामुत्पादस्थितिभंगा न दृश्यन्ते सिद्धपुरुषैः। तथा च आगमः—

न जातो न मृतश्चैव न रूपी नाप्यरूपवान्[19]।
न संसारे न निर्वाणे न कारस्तेन शून्यते[20] ॥

[४] चतुर्थपदेन भावस्वरूपमाह। भुसुकु भणइ इत्यादि। कटमिति पूर्वोक्तार्थं। भुसुकुपादो वदति। सकलभावानाम् एषः स्वरूपः [=एतत् स्वरूपं]। एतस्मिन् गंभीरसहजानन्दानु-

13…13. H. न को विद्वान् मुक्तो वेति; gaṅ du yaṅ bciṅ pa daṅ grol ba med pa shes so 'न कोऽपि बन्धनमुक्त इति'। 14. see note 3. 15. मनो is not separated from बोधि° in H. 16. sems rin po che 'चित्तरत्न'। 17. विषति stands for विशति; Tib. *rab tu shugs pa'o* 'प्रतिष्ठति' is not literal. 18..18. H. स (स्व) इतरतर एव; śin tu riṅ du gyur pa'o 'सुदूरतर एव'। 19. H. नाधिरूपवन्; gzugs med pa yaṅ min 'नाप्यरूपवान्'। 20. शून्यते stands for सूच्यते; mtshan 'लक्ष्यते, सूच्यते'।

भावाद् भावाभावविकल्पपरिहारेण कोऽपि योगी जनि[21]संसारचारकागारे यातायातं दृश्यते[21] । तथा च सरहपादः—

गंभीरइ उआहरणेँ णउ पर णउ अप्पाण ।
सहजाणन्देँ चउट्ठक्खण णिअ संवेअण जाण[22] ॥०॥४३॥

[ त्रयश्चत्वारिंशत्तम्यां चर्यागीत्यां टीका ॥ ]

21. H. जिन ; skyes 'जन्मन्, जनि' । 22. दृश्यते stands for पश्यति ।
22. *Sarahapāda : Dohākoṣa* : verse 96. H. reads : गम्भीर अह उआणस उपरणो अप्याण । सहजानन्द चउज्जइ छणिअ संवेअण जाण ॥ Tib reads : zab mo ñid kyaṅ mtshan du med/dag daṅ gshan du mi dmigs so//lhan cig skes pai dga' ba yi/ 'bras bu raṅ rig ñid kyis śes// "गंभीरतापि अलक्षणा ( अनुदाहरणा वा ) स्वपरालंबना नास्ति । सहजानन्दस्य फलं स्वसंवेदनेन जानीहि ॥"

॥४४॥

[ राग मल्लारी कङ्कण[1] पादानाम् । ]

सुने सुन मिलिआ जबेँ ।
सअल धाम[2] उइआ तबेँ ॥ [१] ॥

आच्छहुँ चउखन संबोही ।
माझ निरोहेँ अणुअर[4] बोही ॥ ध्रुवपद ॥

बिन्दु णाद [5]ण हिएँ पइठा[5] ।
आण चाहन्ते आण विणठा ॥ [२] ध्रु ॥

[6]जथा आइलेसि[6] तथा जान ।
माझे [7] थाकी सअल विहाण ॥ [३] ध्रु ॥

भणइ कंकण कलअल सादेँ ।
सर्व वि च्छरिल[8] तथता नादेँ ॥ [४] ध्रु ॥

1. H. कोङ्कण० ; the Carya in its forth *Pada* reads as कंकण and the commentary on it does the same. 2. धाम ∠ धर्म ; Cf. Tib. chos rmams 'धर्माः' । 3. H. निरोहेँ ; 'gog pas 'निरोधेन' । 4. अणुअर ∠ अनुत्तर ; bla med 'अनुत्तर' । 5...5. H. णहिँए पइठा ; sñiṅ la 'jug pa med 'न हृदये प्रविष्टः = *Apabhraṃśa* ण हिएँ पइठा' । 6..6. H. जथाँ आइलेँसि । 7. H. मासं ; dbus 'मध्य' । 8. H. does not divide वि from च्छुरिल ; the form छुरिल is to be derived from the root छुर् 'scatter'.

शून्येन शून्यं मिलितं यदा ।
सकलधर्मा उदितास् तदा ॥१॥

अस्मि चतुरः क्षणान् संबोध्य ।
मध्ये निरोधेन अनुत्तरा बोधिः ॥०॥

बिन्दुर् नादो न हृदये प्रविष्टः ।
अन्यत् पश्यतो ऽन्यद् विनष्टं ॥२॥

यथा आगतोऽसि तथा जानीहि ।
मध्ये स्थित्वा सकलं विजहिहि ॥३॥

वदति कंकणः कलकलशब्देन
सर्वमपि च्छुरितं तथतानादेन ॥४॥

[१] परमकरुणासवपानतः प्रमुदितो हि कंकणसिद्धाचार्यस्तमेवार्थं शब्दान्तरेण व्युत्पादयति । सुने इत्यादि । तृतीयस्वाधिष्ठानशून्ये वज्रगुरोश्चाधिष्ठानाच्चतुर्थं पदं शून्यं यदा मीलति स्वयं तदा तस्मिन् समये । सर्वधर्ममिति युगनद्धफलोदयो भवतीति ॥

[ध्र ] ध्रुवपदेन तमेवार्थं कथयति । चउखणमिति । तस्माद्विचित्रादिक्षणेन चतुर्थानन्दं संबोधयित्वा तिष्ठामि । तेनाहं मध्यमनिरोधेति । सप्तप्रकृतिदोष[9] समाधिमला[10]-निधानाद्[11] अनुत्तरबोधिं [ =०बोधिर् ] लभ्यते । तथा च हेवज्रकल्पे—

आनन्दास्तत्र जायन्ते इत्यादि ॥

9. H. ०दोषा० ; ñes pas '०दोष-' । 10. H. ०मल० [ ? ]; dri ma'i ०मल-' [?] 11. gshi las 'मूलात्, आधारात्, निधानात्, आलयात्' ।

[२] द्वितीयपदेनाभ्यासमाह । नादमित्यादि । [12]दीर्घहुंकारमुपायग्राहकज्ञानविकल्पं[12] विन्दुरिति । प्रज्ञाग्राहकज्ञानविकल्पः नादः । एतदुभयं विकल्पेन तस्मिन् समये परित्यक्तो[13]ऽस्मि । अतः सर्वधर्मानुपलंभं पश्यन् चित्तबोधनं च प्रणष्टं ममेति[14] ॥

[३] तृतीयपदेन संवृतिबोधिचित्तस्य कारताम्[15] आह । यस्मेत्यादि । आदौ यस्माद् बोधिचित्तादुत्पन्नोऽसि तस्मिन् निजबोधिचित्ते इन्द्रिय[16]विषयविकल्पविरहिते यच्चतुर्थसुखसंवेदनरूपं [ तत् ] जानीहि । तथा च सरहपादाः—

[17]जं दिढ चीअ विलोट्टिउ पवने समरस होहि ।
इंदि विषअ उअ संधिअ अन्ने कि सम संबोहि[17] ॥[18]

[४] चतुर्थपदेन स्वकीयप्रभावं प्रतिपादयति । भणइ इत्यादि । कंकणपादसिद्धाचार्यो हि वदति । साकारनिराकारादिबालयोगिनां कलकलः समतथतानादेन भग्नः । तथा च आगमः—

शून्यतासिंहनादेन त्रासिताः सर्वशास्त्रवः ॥०॥४५॥

[ चतुश्चत्वारिंशत्तम्यां चर्यागीत्यां टीका ॥ ]

12. H. दीघहुंकारो नापायग्राहकज्ञानविकल्पं ; hūṃ yig riṅ po thabs 'dsin pa'i śes pa'i rnam par rtog pa la 'दीर्घहुंकारमुपायग्राहकज्ञानविकल्पं' । 13. परित्यक्तः stands for परित्यक्तवान् । 14. H. मम (ने) । 15. byed pa ñid 'कारित्र' । 16. H. इन्दु० ; dbaṅ po 'इन्द्रिय' । 17...17. Tib. reads :

gaṅ la sems ñid brtan gyur rnam bzlog gyur/
rluṅ daṅ ro mñam ñid gyur pa yi//
dbaṅ po yul daṅ mtshams ñid ji bshin du/
gshan du gaṅ gis mtshuṅs pa ñid du 'gyur//

'यत्र चित्त दृढमपि विवर्तसे पवने समरसो भवसि ।
इन्द्रियविषययोः सन्धिर्यथा अन्यत्र केन समो भवसि ॥

H. reads :

जं दिट चिअ विलोअ टाउ पवने समरस होही ।
इन्दि यअ भउआ सन्धिअ अन्ने कि सम संबोहि ॥

18. The chaya of the verse :—

यत् दृढचित्त ! विवृत्य पवने समरसं भवसि ।
इन्द्रियविषयसंधितोऽन्येन किं समा [भवति] संबोधिः ॥

॥४५॥

[ राग मल्लारी काह्नुपादानाम् । ]

मण तरु पाञ्च इन्दि तसु साहा ।
आसा बहल[1] पात [2]फल वाहा[2] ॥ [१] ॥

वरगुरुवअणे कुठारेँ छिजअ ।
काह्न भणइ तरु पुण न उइजअ ॥ ध्रुवपद ॥

वाढ़इ[3] सो तरु सुभासुभ पाणी ।
छेवइ विदुजन गुरुपरिमाणी ॥ [२] ध्रु ॥

जो तरु छेवइ भेउ न जाणइ ।
सड़ि[4] पड़िआँ रे मूढ ता भव माणइ ॥ [३] ध्रु ॥

सुणतरु[वर][5] गअण कुठार ।
छेवइ सो तरु मूल न डार[6] ॥ [४] ध्रु ॥

1. बहल 'strong or very much' to be derived from the root बंह् 'make firm'; 'bab pa 'वहन' । 2...2. H. फलाहा ( ह वाहा ); 'bras 'bab par byed 'फलं वहति' । 3. H. वाटइ ; 'phel 'वर्धते, वाढ़इ' । 4. सड़ि= शातित्वा ∠ शत् 'cut in pieses'. 5. śiṅ mchog 'तरुवर' । 6. H. डाल ; The Com. also gives *pratīka* as डाल ; the rhyme requires डार ।

मनस्तरुः पंचेन्द्रियाणि तस्य शाखाः ।
आशाबहुलपत्रफलवाही ॥१॥

वरगुरुवचनेन कुठारेण छिन्धि ।
कृष्णो वदति तरुः पुनर् नोत्पद्यते ॥०॥

वर्धते स तरुः शुभाशुभपानीयेन ।
छिनत्ति विद्वज्जनो गुरुप्रमाणकः ॥२॥

यस्तरुं छिनत्ति [ परं तस्य ] भेदं न जानाति
शतित्वा पतति अरे ततो भवं मनुते ॥३॥

शून्यतरुवरो गगनकुठारः ।
छिद्यतां स तरुः [ शिष्यते यथा ] मूलं न शाखाः ॥४॥

[१] तमेवार्थं परमानन्दमुदितो हि कृष्णाचार्यः प्रतिपादयति । मणतरु[7] इत्यादि। अनादिभववासनापल्लवाश्रयत्वात् कृष्णाचार्यपादेन स्वचित्तं तरुत्वेन उत्प्रेक्षितं। तस्य चित्ततरोः। पञ्चेन्द्रियेण शाखामधिमुच्य। आशा[8] तस्य पत्रबहुलफलं चेति ॥

[ ध्रु ] ध्रुवपदेन तस्यानुत्पादं सूचयति । वरगुरु इत्यादि । वरगुरुवचनकुठारेण तस्य वासना छिद्यमाना सती। कृष्णाचार्यो वदति स एव चित्ततरुरेव भूमौ पुनर्नोत्पद्यते। तथा च द्विकल्पे—

न बुद्धो लभ्यते ऽन्यत्रेत्यादि[9] ।

[२] द्वितीयपदेन गुरुवचनप्रभावमाह। बाढइ इत्यादि। सोऽपि चित्ततरुः स्वशुभाशुभं जलं गृहीत्वा स्वयमनादिसंसारभूमौ वर्धते। अथ श्रीगुरुं पृष्ट्वा तस्य वचनानुभवं कृत्वा विदुजनेति योगीन्द्रास्तस्य चित्तवृक्षस्य छेदं कुर्वन्ति ॥

7. H. मन० । 8. H. आसा। 9. H. ०ऽन्यतेत्यादि ; gshan du... shes bya ba la sogs pas so 'अन्यत्र..इत्यादि ।

[३] तृतीयपदेनासंप्रदाययोगिनां संसारतामाह। जो तरु इत्यादि। येऽपि बाल्योगिन-श्चित्तवृक्षस्य छेदमिति निःस्वभावीकरणं न जानन्ति तेऽपि संसारदुःख[10]वारिधौ पटित्वा[10] पतन्ति। पुनस्तत्रैव भवग्रहं कुर्वन्ति। मोक्षमार्गं न जानन्तीति ॥

[४] चतुर्थपदेन मार्गानुशंसामाह। सुण तरुवर इत्यादि। तस्मादविद्याद्यन्यतरोः। भो बाल्योगिन इति। प्रकृतिप्रभास्वरकुठारेण गुरुसंप्रदायात् [11]वासनां छेदं कुरु[11]। डालमिति येन पुनरिन्द्रियस्याधीनं न भवति ॥०॥४५

[ पंचचत्वारिंशत्तम्यां चर्यागीत्यां टीका ॥ ]

10...10. H. वारिधौ पटित्वा(त्वं); Tib. 'khor shiṅ 'gro drug tu ltuṅ bar 'gyur ro 'षड्गतिचक्रे पतन्ति' is not a literal rendering.
11...11. It stands for वासनायाश्छेदं कुरु।

॥३६॥

[ राग शबरी जअनन्दी[1] पादानाम्

पेखु[2] सुअणे अदशे जइसा ।
[3]अन्तराले सो हव[3] तइसा[4] ॥ [१]

मोह[5] विमुक्का जइ मणा ।
तबेँ टुटइ अवणा-गमणा ॥ ध्रुवपद ॥

[6]णउ दाढ़इ णउ तिमइ[6] न च्छिजइ ।
पेख मोघ[7] [ माआ ][8] मोहे बलि बलि बाझइ ॥ [२] ध्रु ॥

छाया माआ काअ समाणा ।
बेणि पाखेँ सोइ [9]वि णाणा[9] ॥ [३] ध्रु ॥

चिअ तथतास्वभावे षोहिअ ।
भणइ जअनन्दि फुड़ अ[ा]ण ण होइ ॥ [४] ध्रु ॥

1. Tib. transcription Dsa-ya-nan-ta'i. 2. The commentary gives *pratīka* as पेखह but renders it as पश्य ; Tib. blta bar gyis 'प्रेक्षस्व, पश्य' ; H. reposts the reading of Ms. as पेषु । Here पेखु is not to be taken as a verb but a noun to interpret the *pada* correctly. As a noun पेखु is to be derived from प्रेक्ष्य ( = प्रेक्षणीय = प्रेक्षणीयक ) 'show, sight, दृश्य' । 3..3. H. अन्तराले मोह ; bar gyi srid pa =अन्तरालस्य भवः =अन्तराभवः ; The reading मोह does not convey

प्रेक्ष्यं लभ्यते आदर्शे यादृशं।
अन्तराले स भवः ( =सोऽन्तराभवः [ अपि ] ) तादृशः ॥१॥

मोहविमुक्तं यदि मनः ।
तदा त्रुट्यति गमनागमनं ॥०॥

न दह्यते न तिम्यति ( =क्लिद्यते ) तेम्यते ( =क्लेद्यते ) [वा]न च्छिद्यते ।
पश्य मोघाः मायामोहेन बलीयो बध्यन्ते ॥२॥

छाया माया कायः (च) समाः ।
उभयपक्षे स एव नाना ॥३॥

चित्तं तथतास्वभावेन शोधितं ।
वदति जयनन्दी स्फुटम् अन्यद् न भवति ॥४॥

any meaning and the commentary explains it as अन्तराभवविज्ञान। For the word मोह, therefore, to be read here as सो हम 'स भवः'। For अन्तराभव cf. Abhidharmakośa 3. 10 :—

मृत्यूपपत्तिभवयोरन्तरा भवतीति यः ।
गम्यदेशानुपेतत्वान्नोपपन्नो ऽन्तराभवः ॥

4. Tib. adds kyaṅ 'अपि' before तइसा। 5. H. मोह(द); rmoṅs 'मोह' supports the correction of H. 6...6. नौ दाटइ नौ तिमइ; tshig pa ma yin gśr min 'न दह्यते न क्लिद्यते'। तिमइ ∠ (1) तिम्यति √ तिम् ( of *divādi* class ) 'become wet' (2) तेम्यते√ तिम् ( of *bhvādi* class 'make wet' ). 7. H. मोम; for मोम here मोघ is to be read on the ground of कुधियः in the commentary. This word is found in *Sūtras* more or less as an abusive term. 8. Sgyu ma la 'माया-'। 9..9. H. विणा; sna tshogs 'नाना'; विणा therefore is to be read as

[१] परमकरुणार्जनाय[11] तमेवार्थं अभिज्ञालाभी अयनन्दिपादः प्रतिपादयति । पेखइ [? पेखु] इत्यादि । यथा स्वप्ने स्वप्रतिमासं यथादर्शे प्रतिबिम्बं तादृशमन्तरामवविज्ञानं पश्य । तथा च आगमः—

जिम जल मज्झे चंद [12]स हि नो स इत्यादि ॥

[ध्रु] भो अनधिगतमार्ग यदि त्वं विज्ञानसंक्रमणकालेऽपि सद्गुरुवचनमार्गमनुस्मरन् स्वचित्तं मोहविमुक्तं करोषि तदभावे संसारे यातायातं त्रुट्यति । तस्मात् स्वात्मानं मिथ्या मोहेन किमर्थं निष्फलं बाधयसे । तथा च भूसुकुपादाः—

[न] क्लेशो विषयेषु[13] इत्यादि ॥

[२] द्वितीयपदेन परमार्थचित्तस्यानुशंसामाह । नउ[14] दाढइ[15] इत्यादि । सद्गुरुचरणपंकजरजःप्रसंगात् तदेव[16] संसारमनो यदि मोहविमुक्तं भवति । तदग्निना न दग्धं भवति । जले न प्लावनीयं भवति । शस्त्रेण च्छेत्तुं न पार्यते । परमार्थचित्तस्य अंकमदं[17] [कुरु][18] । [19]एवं पश्यन् सन्[19] तथापि कुधियो मोहे परं बद्धा भवन्ति । तथा च बहिःशास्त्रे—

यत्नेन पापानि[20] समाचरन्ति पुण्यं प्रसंगादपि [नाचरन्ति][21] ।
आश्चर्यमेतद्धि मनुष्यलोके क्षीरं परित्यज्य विषं पिबन्ति ॥

[३] तृतीयपदेन परमार्थसत्वस्य लक्षणमाह । छायेत्यादि । मोहविमुक्ता यदा परमार्थविदो भवन्ति । तदा छायामायासमं स्वविग्रहं ज्ञानलोचनेन पश्यन्ति । पक्षापक्षभिन्नं श्रीहेरुकरूपं चाकलयन्ति । तथा च सरहपादाः—

महामायादेवी इत्यादि ॥

वि (=अपि) णाणा (=नाना) । 10. सोहिअ =शोधित ; Tib. sbyan bar gyis 'शोधय' । 11. H. ०अजणाय ; ०bsags pa'i phyir '०संचयाय or ०अर्जनाय' । 12. H. स हि नो स ; yod med min 'अस्ति न नास्ति' । 13. Bodhicaryāvatāra *paricheda* 4 verse 47. 14. H. नो । 15. H. दाठइ । 16. H. तदेवं ; de ñid 'तदेव' । 17. अंकमद=लक्षणाभिमान Cf. Tib. rtags kyi ṅa rgyal. 18. gyis so. 19...19. एवं पश्यन् सन् stands for एवं पश्यन्तः सन्तः । 20. H. पावणि ; sdig pa 'पाप' । 21. Spyod mi byed,

॥४७॥

[ [1]राग गुर्जरी धामपादानाम्[1] । ]

कमलकुलिश माझेँ [2]भयइ लेली[2] ।
समताजोएँ जलिल चण्डाली ॥ [१] ॥

डाह डोम्बी घरे लागेलि आगि[णी] ।
[3]ससहर लइ सिञ्चहुँ[3] पाणी ॥ ध्रुवपद ॥

नउ खर जाला धूम न दिसइ ।
मेरु शिखर लइ गअण पइसइ ॥ [२] ध्रु ॥

दाढ़इ[4] हरिहर बाह्म भडारा[5] ।
दाढ़इ[6] णवगुण शासनपाड़ा ॥ [३] ध्रु ॥

भणइ धाम फुड़ [7]लेहु रे[7] जाणी ।
पञ्च नालेँ उठे गेल पाणी ॥ [४] ध्रु ॥

---

1..1. H. गुञ्जरीपादानाम् ; gurjjarī shes bya ba'i glu dbyaṅs chos pa'i shabs kyi'o 'गुर्जरीति नाम रागः धर्मपादानाम्' । 2...2. H. भइम मिअलो ; gyur ba blaṅs 'take what existed'. 3...3. H. सहषलि सिच हुँ ; ri boṅ 'dsin pa'i chu ni lon la gtor bar gyis 'शशधरजलं गृहीत्वा सिंच' । 4. H. फाटइ ; tshig 'दहति' । 5. भरा ; rje btsun 'भट्टारक' । 6. H. फिटा हइ ; thig 'दहति' । 7...7. लेहु रे ; blaṅs nas 'गृहीत्वा' ; रे is not translated in Tib ; लेहु जाणी ( =जानि लेहु = जानलो Hindi ) 'जानीहि' ।

कमलकुलिशमध्ये सत्वं [ =बीजं ] हि गृहीतवती ।
समतायोगेन ज्वलिता चण्डाली ॥१॥

दाहो डोम्बीगृहे लग्नो ऽग्निः ।
शशधरं गृहीत्वा सिंच पानीयं ॥०॥

न तु 'खर' ज्वाला धूमो न दृश्यते ।
मेरुशिखरं गृहीत्वा गगनं प्रविशति ॥२॥

वहति हरिहरब्रह्मभट्टारकान् ।
वहति नवगुणशासनपट्टकान् ॥३॥

वदति धामा स्फुटं अरे जानीहि ।
पंचनालैः उद्धृतं पानीयं ॥४॥

[१] तमेवार्थं परमकरुणामैत्रिकमानसः सिद्धाचार्यो धामपादो हि प्रतिपादयति । कमलकुलिशमित्यादि । प्रज्ञोपायसमतायां[8] सत्याक्षर[9] महासुखरागानल[10]वर्ताभासी निर्माणचक्रे चण्डाली ज्वलिता मम ॥

[ ध्रु ] ध्रुवपदेन तमेवार्थं विस्पष्टयति । डाहेत्यादि[11] । महासुखरागदाहयुक्तो ऽग्निः । डोम्बी परिशुद्धावधूती[12] गृहे लग्नः । तेन महासुखराग्निना मया सकलविषयादिवृन्दाश्रयो दग्धः । ससहरमिति । सद्गुरुप्रसादाद् विलक्षणपरिशोधितं संवृतिबोधिचित्तं गृहीत्वा तस्या वह्नेर्विनिर्वापणं करोमीति । तथा च हेवज्रे—

चण्डाली ज्वलिता नाभौ इत्यादि ॥

8. H. ०समतां । 9. yaṅ dag par sbyor bas 'सम्यग्योगात्' । 10. H. ०रागानिल० ; Tib. ०chags kyi me० ०रागानल०' । 11. H. दाहेत्यादि । 12. H. अवधूति ।

[२] द्वितीयपदेन [illegible] [illegible] । [illegible] [illegible] । यथा [illegible] स्तीव्रं ज्वलनतादि धूमादिकं दृश्यते तद्वयं [illegible] [illegible] । [illegible] [illegible] दग्ध्वा[15] पूर्वोक्त-सुमेरुशिखराग्रे गगनमिति महासुखचक्रे अन्तर्भवतीति ॥

[३] तृतीयपदेनोक्तार्थं प्रतिनिर्देशयति । [illegible] [illegible] । चाद्योति संध्यावचनेन पिङ्गलाडिका बोद्धव्या । हरिरिति मूत्र[illegible] । हर [illegible] [illegible] । एता दग्ध्वा[15] । ऊर्ध्वं ललनारसनादिकाश्च । नव गुणमिति । नव पवनं च । शासनमिति चक्षुरिन्द्रियादि विषयाख्यं च दग्ध्वा स एव रागानलो निःस्वभावो गतः । तथा च [illegible]—

मन मर इत्यादि ॥

[४] चतुर्थपदेन चतुर्थानन्दप्रत्ययितामाह । धामेत्यादि । धामपादो हि वदति भो अनधिगतमार्ग श्रीगुरुचरणोपायेन सम्यक्कुलिशाब्जसंयोग[16] स्फुटं कृत्वा स[17]हजानन्दं जानीहि । तेन महासुखाब्जाद् आगतमात्रं यद् बोधिचित्तं रत्नशिखरमात्रं चतुर्थानन्दात् सशीतनादपद्मनादे ऽवधूतीमार्गेण पुनस्तत्रैव गच्छति ॥०॥ ][17] ४४ ॥

[ सप्तचत्वारिंशत्तम्यां चर्यागीत्यां टीका ॥ ]

13. H. नो । 14. mi 'न' । 15. H. दग्धा । 16. H. योगो ।
17···17. lhan cig skys pa'i dga' ba śes par gyis śig pa'o. de yis bde ba chen po chu skyes las hoṅs pa ñid gaṅ byaṅ chub kyi sems nor bu'i rtse mor son pa bshi pa'i dga' bas sbyaṅs pa na-da daṅ bcas pa pad-ma'i na-da la sñes a-va-dhu-ti lam gyis slar yaṅ de ñid du 'gro ba'o.

॥४८॥

[ रागः पटहः कुक्कुरीपादानाम् ।[1] ]

कुलिशाब्जयुग्मं प्रविष्टाः ।
समतायोगस्य सैनिकसमूहाः ॥१॥

विषयेन्द्रियग्रामानहन् ।
शून्यताराजो महासुखनामा ॥ [ ध्रुवपद ] ॥

तूर्यशब्दः शंखध्वनिर् अप्रतिहतनादं नदति ।
मोहभवबलानि दूरातीतानि ॥२॥

सुखपुरं शिखरे संस्थाप्य सर्वम् आकृष्ट ( संगृहीतं वा ) ।
अंगुलिम् ऊर्ध्वं क्षिप्त्वा कुक्कुरीपादो वदति ॥३॥

अयं त्रैलोक्ये महासुखेन जयति ।
तत्त्वस्यार्थं शब्दान्तरेण कुक्कुरीपादेन कथितं ॥४॥

---

1. The *Caryā* with its commentary, lost in its original form, has been retranslated here from the Tib. version appended at the end of the work.

[१] कुलिश इत्यादि । विषयानन्दयुद्धनिरोधार्थं । कुलिशाब्जे तथा उपायप्रज्ञे । महासुखस्वभावः कुक्कुरीपादः कर्षति । समताइति । एकत्वभावस्तु महासुखभावः एव योगीश्वरस्य समतायोगः । स एव दारिकुः । तथा च आगमः—

एको भावस्तत्त्वतो येन दृष्टः
सर्वे भावास्तत्त्वतस्तेन दृष्टाः ।
एको भावः सर्वभावस्वभावः
सर्वे भावा एकभावस्वभावाः ॥[2]

[ ध्र ] ध्रुवपदेन महासुखस्य प्रभावम् आह । अहन् इति । महासुखश्रवणमात्रेण भवमण्डलस्य विषयेन्द्रियाणि नाशितानि ॥

[२] द्वितीयपदेन तमेवार्थं प्रकाशयति । नदतीत्यादि । अप्रतिहतनादमिति तूर्यशब्द-शंखशब्दा युद्धे नदन्ति । यतः शून्यतामध्यजातत्वाद् भोः ! योगिन् भवविषयबलानि निःस्वभावीक्रियन्ते ॥

[३] तृतीयपदेन परमार्थबोधिचित्तानुशंसामाह । [त्रीणि इत्यादि त्रीणि[3] । महासुखाग्निना कायादिकानां त्रयाणां मंडलानां पापानि दग्ध्वा महासुखचक्रशिखरे स्थित्वा अच्युतमहासुखस्य बोधिचित्ताग्निा कर्षणं करोति । तथा च [ उक्तं ] रतिवज्रेण—

वज्रपद्मे मुद्रयित्वा बोधिचित्तं न हापयेत् । इति ॥

[४] चतुर्थपदेन फलस्वभावम् आह । ऊर्ध्वम् इत्यादि ] कुक्कुरीपादेन भो योगिन् अंगुलिमूर्ध्नी[4] कृत्योक्तः एतत्त्रैलोक्यमिति कायवाक्चित्तस्याभासदोषो महासुखेन जितः । तथा च सरहपादाः—

घर अच्छन्ते मा जाहु[5] वण इत्यादि ॥०॥४८॥

[ अष्टचत्वारिंशत्तम्याश्चर्यागीत्या टीका ॥ ]

2. Cf. भावस्यैकस्य यो द्रष्टा द्रष्टा सर्वस्य स स्मृतः । एकस्य शून्यता यैव सैव सर्वस्य शून्यता ॥ आर्य गगणगञ्जसमाधिसूत्रेऽपि—एकेन धर्मेण यु सर्वधर्मान् अनुगच्छते मायमरीचिसादृशान् । अग्राह्यतुच्छानलिकानशाश्वतान् सो बोधिमण्डं न चिरेण गच्छति ॥ इति ॥ समाधिराजसूत्रेऽपि— यथ ज्ञात तया ऽत्मसंज्ञ तथैव सर्वत्र पोषिता बुद्धिः । सर्वे च तत्स्वभावा धर्म विशुद्धा गगणकल्पाः ॥ एकेन सर्वं जानाति सर्वमेकेन पश्यति । कियद् बहु पि भावेत्वा न तस्योत्पद्यते मदः ॥ इति । Madhyamakavṛtti p. 128. 4. H. ०र्धी० । 3...3. It is not found in the *Caryā*. 5. H. जाह्न ; 'grobar ma cig 'मा गमः' ।

॥४९॥

[ राग मल्लारी भुसुकुपादानाम् । ]

राज-[1] नाव पाड़ी पँउआ-खालेँ वाहिउ ।
अदअ-बङ्गाले[2] देश[3] लुड़िउ ॥ [१] ॥

आजि भुसु[कु] बङ्गाली भइली ।
णिअ घरिणी चण्डाली लेली ॥ ध्रुवपद ॥

डहिअ पञ्चपाटण इंदिविसआ णठा ।[4]
ण जाणमि चिअ मोर कहिँ गइ पइठा ॥ [२] ध्रु ॥

[5]सोण त रुअ[5] मोर किम्पि ण थाकिउ ।
णिअ परिवारे महासुहे थाकिउ[6] ॥ [३] ध्रु ॥

चउकोडि भण्डार मोर लइआ सेस ।
जीवन्ते मइले नाहि विशेष ॥ [४] ध्रु ॥

1. H. बाज ; rgyal po राज । 2. H. क्लेश Ms. द्रेश ; yul 'देश' । 3. अदय=1 निर्दय ; 2 अद्वय । The first meaning has been rendered by Tib. as *brtse ba med*. Ms. दङ्गाले ; Tib. bam gal. 4. H. डहि जो पञ्चघाट णइ दिवि संज्ञा णठा ; rnam pa lṅa po bsregs śiṅ yul rnams pa rlag 'पंचाकारा दग्धाः, विषया नष्टाः' ; cf. the commentary ; पंचस्कंधाश्रिताहंकार-ममकारादिकं दग्धं । इन्द्रियविषयं च । 5. H. सोण तरुअ । 6. The commentary paraphrases it as निमग्न and after it थाकिउ may be replaced by बूडिउ to remove *punarukta-doṣa*.

राजनीः पातयित्वा पद्मकुल्यका वाहिता ।
अद्वयवंगालेन देशो [ =विषयो ] लोडितो लुंठितो वा ॥१॥

अद्य भुसुको बंगाली भूता ।
निजगृहिणी चंडाली-गृहीता ॥०॥

दग्धानि पंचपत्तनानि इंद्रियविषया नष्टाः ।
न जानामि चित्तं मम क गत्वा प्रविष्टं ॥२॥

सुवर्णं मय रूप्यं [ शून्यं रूपं वा ] मम किमपि न स्थितं ।
निजपरिवारेण महासुखे स्थितं ॥३॥

चतुष्कोटिभांडागारो मम नीतः शेषः ।
जीवति मृते च नास्ति हि विशेषः ॥४॥

[ १ ] प्रज्ञापारमिताम्भोधिमरिमथन[त]स्तामृत[7] परितृप्तमतिः सिद्धाचार्यभुसु[कु]पादो बङ्गालिकाव्याजेन तमेवार्थं प्रतिपादयति । प्रज्ञारविन्दकुहरह्रदे सद्गुरुचरणोपायेन प्रवेशितं । तत्रानन्दादिशब्दादीत्यादि । अद्वयवज्रबंगालेन वाहित इति । अभिन्नं कृतम् । तथा च आगमः—

न क्लेशा बोधितो भिन्ना न बोधौ क्लेशसंभवः ।
भ्रान्तितः क्लेशसंकल्पो भ्रान्तिः प्रकृतिनिर्मला ॥

[ ध्रु ] ध्रुवपदेन तमेवार्थमभिद्योतयति । आजीत्यादि । स्वयमात्मानं संबोध्य वदति । भो भुसुकु अद्य ध्यानपरिपक्वावस्था-वियोगेन[8] अद्यैव बंगालिका भूता । अस्मात् निज-गृहिणी अपरिशुद्धा अवधूती वायुरूपा । चण्डालेनेति । स्पर्शप्रकृतिप्रभास्वरेण नीता ॥

[२] द्वितीयपदेन भावनिःसङ्गतामाह । डहिअ[9] इत्यादि । तेन महासुखानलेन पंचस्कन्धाभिमाहंकारममकारादिकं दग्धं । इन्द्रियविषयं च । अत एव स्वयं [वि]कल्पपरिहारेण जानीमः [illegible] । तथा च सरहपादाः—

जये [illegible]इत्यादि ॥

7. de kho na ñid 'तत्व' । 8. Sbyor ba dan bral bas.
9. H. दहिम ।

[३] तृतीयपदेन तमेव निर्दिशति। सोन रुअ[10] इत्यादि। सोनमिति शून्यताग्रहः। रुअ इति मायाग्रहः। उभयविकल्पं स्वरूपविचार्यमाणे सति किंचिन्न स्थितम्। निजपरिवारेणेति। अत एव निर्विकल्पपरिवारेण महासुखरमनिमग्नोऽहं। तथा च आगमः—

अर्थेनार्थिजनान्[11] विना मतिवरान्[12] दूरं नयन्तीह ये
धन्यास्ते जिन[13]भोगसंगमधियो ध्यायन्ति नक्तं दिनम्।
नो पश्याम्यनिशं सुखाश्रयपदं ध्यायन्नहं मूढधीः
सत्त्वार्थे करुणारसे ऽतिगहने मज्जाम्यकांक्षी पुनः॥

[४] चतुर्थपदेनात्यन्ताभावमाह। चउ कोटात्यादि। यत् परं चतुष्कोटिविचार-भण्डारं मम तेन अद्वयबंगालेन गृहीतम्। अत एव ममात्मनि जीवनमरणध्यानादिविकल्पं नास्ति। तथा च [श्री][14]हेवज्रे—

पितरि प्राप्तं यत्सौख्यं इत्यादि ॥४९॥

[ एकोनपंचाशत्तम्यां चर्यागीत्यां टीका ॥ ]

10. H. सोनतरुअ ; carya reads सोन त रुअ 'सुवर्णम् अथ रूप्यं' ; Tib. has *gser dnul* 'सोन रुअ=स्वर्णरूप्यं। 11. H. अर्थे (थि)ना (म)र्थिजनान्। 12. H. ०तुरां (?); blo gros mchog 'मतिवर'। 13. H निज ; rgyal po 'जिन'। 14. dpal ldan.

